# संस्कृतपत्रकारिता

[ इतिवृत्तम् अधुनातनं स्वरूपं च ]

|||

|||

लेखकः सम्पादकश्च

डॉ. बलदेवानन्दसागरः

|||

|||

संस्कृतभारती

नवदेहली

प्रकाशनम्
**संस्कृतभारती**
मातामन्दिरगली, झण्डेवालान
नवदेहली - ११० ०५५



**प्रथममुद्रणम् २०११**

**मूल्यम् - रू. ३०/-**

**प्रतिकृतयः १०००**

**मुद्रणम् -**
**वागर्थ**
एन्.आर्. कालोनी, बेङ्गलूरु - १९

ISBN - 978-93-81160-19-0

**SAMSKRITA-PATRAKARITA**
An innovative book on Samskrit journalism by
Dr. Baldevananda Sagar

Publisher - Samskrita Bharati, Mata Mandir Gali,
Jhandevalan, New Dlehi - 100055
Tel. & Fax - 011-23517689
Pages - VIII + 72

Price - **Rs. 30/-**

First Print - January- 2011

Printed at : **VAGARTHA** N. R. Colony, Bangalore - 19

# आत्मनिवेदनम्

पूर्वं नैकवारं विचारितमासीत् यत् संस्कृत–पत्रकारिता–विषये किमपि शोधपूर्णं प्रबन्धं विरचयेयम्। परञ्च आकाशवाण्याः कार्यजातं तादृशं वर्तते यत् प्रतिदिनं वारद्वयं कार्यालयागमन–गमन–निरतेन मया न कदापि तादृषो विश्रान्तिपूर्णोवसरोऽधिगतः।

सौभाग्यात् कतिपयमासेभ्यः प्राक् राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिवर्येण आदरणीयेन आचार्य–राधावल्लभत्रिपाठिना संस्कृतपत्रकारितायाः प्रमाणपत्रीय–पाठ्यक्रमहेतोः पाठलेखनार्थमादिष्टेन अमुना जनेन प्राक्संकल्पितकार्यं पूर्णतां नेतुं महीयान् अवसरो लब्धः।

**संस्कृत–पत्रकारिता (इतिवृत्तम् अधुनातनं स्वरूपं च)** इति कृतौ अपरेऽपि केचन विषयाः समावेशनीयाः आसन्। ते च सन्ति–

संस्कृत–पत्र–पत्रिकाणां प्रकाशनप्रबन्धनम्

विज्ञापनार्जनम्

मुद्रणम्

वितरणम्

प्रेषणं च।

एतदतिरिच्य पत्रपत्रिकाणां सम्पादन–विषयकोऽध्यायोऽपि संयोजनीयः आसीत् यस्मिन् संस्कृत–पत्र–पत्रिका–सम्पादनसिद्धान्तानां परिशीलनं स्यात्।

इतोऽप्यधिकं सम्पादकस्य वार्ताहरस्य च अर्हता–विषयकाः गुणाः अपि वर्णिताः स्युः। पत्र–पत्रिकाणां मुद्रणेषु विभिन्नेषु स्तम्भेषु संयोजनं समन्वयश्च कया रीत्या स्याताम्, दृश्यसामग्रीप्रयोगः केन प्रकारेण समुचितः सम्भवेदिति विषयाः, आशासे लब्धे सत्यवसरे नूनं ग्रन्थेऽस्मिन् संयोजयिष्यन्ते।

कृपालवो विबुधाः जानन्त्येव यत् संस्कृतवाङ्मये पत्रकारिताविषये प्रामाणिकरीत्या समुपनिबद्धा नाधिकोपजीव्यसामग्री अधिगम्यते। 1973 तमे वर्षे डॉ.रामगोपालमिश्रेण हिन्दीभाषायां 'संस्कृत पत्रकारिता का इतिहास'

इति ग्रन्थो विरचय्य प्रकाशितः। तदनुवर्तिनि काले विविधाः लेखाः संस्कृतविद्वद्भिः, अध्यापकैः शोधार्थिभिश्च यत्र तत्र काले काले प्राकाश्यमानीताः। वर्षत्रयपूर्वम्, लेखिकया, डॉ.चेतनया 'राजस्थाने संस्कृत–पत्रकारता' इति पुस्तकं प्रकाशितम्।

एतदतिरिक्तमन्यदधिकतरम् उपजीव्यसामग्रीजातम् अधुनावधि नोपलभ्यते। आकाशवाण्यां वार्तासेवाप्रभागे विगतेभ्यः सप्तत्रिंशद्वर्षेभ्यः कार्यनिरतेन मया पत्रकारिता–जगत् दृश्य–श्रव्य–संचारमाध्यमानां च संसारः नैकट्येन अक्षिलक्षीकृतौ स्तः। अत एव, प्रथमाध्याये आपाततः पत्रकारिताविषयो विशदीकृतोऽस्ति। द्वितीयाध्याये संस्कृतपत्रकारितायाः उद्भव–विकासौ संक्षेपेण वर्णयितुं प्रयतितम् यस्मिन् प्राक्स्वातन्त्र्यकालिकीनां पत्रपत्रिकाणां संक्षिप्तं विवरणं वर्णितम्। तृतीयाध्याये स्वातन्त्र्योत्तरकालिकीनां संस्कृत–पत्र–पत्रिकाणां विस्तरेण वर्णनं कृत्वा चतुर्थाध्याये **'आधुनिकी संस्कृतपत्रकारिता'** इति विषये साम्प्रतं प्रवर्तमानानाम् अवरुद्धप्रकाशनानां च पत्र–पत्रिकाणाम् अनुक्रमं सूची प्रदत्तास्ति। पञ्चमेऽध्याये संस्कृतपत्रकारितायाः परिवर्तितरूपाणि समीक्षितानि। यद्यपि अध्यायोऽयं स्वतन्त्रग्रन्थरूपेणापि विस्तारयितुं शक्यते। षष्ठेऽध्याये संस्कृतपत्रकारितायाः समस्याः समाधानानि च निरूपितानि सन्ति।

एतद्ग्रन्थनिर्माणावसरे नैकवारं मयानुभूतं यत् संस्कृतपत्रकारिता–विषयिणी सामग्री विविधेषु ग्रन्थालयेषु अधिगन्तुं शक्येत। परञ्च तदर्थं महीयान् कालः यात्राभारश्चापेक्षितौ स्तः।

अस्तु, साम्प्रतन्तु ग्रन्थप्रारूपोऽयं विदुशां करकमलयोः अर्पयित्वा आनन्दसन्दोहमनुभवामि, विश्वसिमि च यद् कृपालवो विबुधाः गुरुजनाः मार्गदर्शनं कृत्वा इतः परमपि किं किमत्र समावेशनीयं विषयजातम्, भाषा, शैली, विषयोपस्थानपद्धतिश्च कीदृश्यः स्युरिति कृत्वा मन्दमतिं मां प्रबोधयिष्यन्तीति प्रार्थये।

एतद्ग्रन्थनिर्माणे अनेकेषां सुहृदां साहाय्यमधिगतमिति कृत्वा नूनं तेषामाधमर्ण्यमावहामि।

कुटुम्ब–पक्षतः अर्धाङ्गिनी श्रीमती शालिनी, पुत्रो जयदेवः, पुत्री च

चिदम्बरा अतितराम् आनुकूल्यमावहन्।

**'पत्रकारितायाः परिवर्तितरूपाणि'** इत्यध्यायस्य कृते उपजीव्य सामग्री–प्रदानार्थम्, अपि च समग्रस्य ग्रन्थप्रारूपस्य सङ्गणके टङ्कणार्थमहं स्नेहभाजनस्य दिव्यानन्दझा–वर्यस्य कृते साधुवादान् व्याहरामि।

मम मित्रेण डॉ.परमानन्दझा–वर्येण आलेखस्य परिष्कारं कृत्वा ममोत्साहः सहस्रशो वर्धितः। तदर्थं तस्मै साधुवादान् ज्ञापयामि।

सर्वेषामपि पूर्वसूरीणां चरणकमलेषु प्रणतिततिपुरस्सरम्–

विदुषां विधेयः–

**बलदेवानन्दसागरः**

2067 तमः विक्रमसंवत्सरः

शारदीय–नवरात्रः

आश्विन–शुक्लपक्षः,

प्रतिपदा, शुक्रवासरः

ईस्वीय–दिनाङ्कः– 08–10–2010

# अनुक्रमणिका

## प्रथमोऽध्यायः

### पत्रकारितायाः उद्भवः विकासश्च



## द्वितीयोऽध्यायः

### संस्कृत–पत्रकारितायाः उद्भवः विकासश्च



## तृतीयोऽध्यायः

### स्वातन्त्र्योत्तरकालिकी संस्कृतपत्रकारिता

## षष्ठोऽध्यायः

### संस्कृतपत्रकारितायाः समस्याः समाधानानि च

# प्रथमोऽध्यायः

## पत्रकारितायाः उद्भवः विकासश्च

### ।। मङ्गलाचरणम् ।।

सदाशिव–समारम्भाम्, शङ्कराचार्यमध्यमाम्।
माधवानन्द–सम्पुष्टाम्, वन्दे गुरुपरम्पराम्।।
नौमि श्रीमाधवानन्दम्, सच्चिदानन्दविग्रहम्।
यस्येक्षण–प्रसादेन, तीर्णोऽहं भवसागरम्।।
गुजराते समारब्धा, भद्रा गुरुपरम्परा।
यत्राद्यो माधवानन्दः स्वामिवर्योऽभवत् पुरा।।
सार्धैकशतवर्षीया, परञ्चैषा सनातनी।
सदाशिव–समारब्धा, शाङ्करीति परम्परा।।
तत्राभवन् महात्मानः, त्यागवैराग्यभूषिताः।
शिवोऽहं–सागराख्योऽत्र, पूज्यो वै मम सद्गुरुः।।
तेन कारुण्यपूर्णेन, दीक्षितोऽहं सुशिक्षितः।
जीवनं सार्थकं जातम्, तस्मै श्रीगुरवे नमः।।
विबुधानां विनोदाय, शोधार्थि–हितकाम्यया।
छात्राणां च प्रबोधाय, लिख्यते पत्रकारिता।।
नूत्न–युगानुरूपेयम्, प्राक्तनाचार्य–दर्शिता।
भूयात् माङ्गल्यदा नित्यम्, संस्कृतपत्रकारिता।।

**प्रस्तावना**

पत्रकारिता नाम लोकतन्त्रस्य चतुर्थः स्तम्भः। विधायिका, कार्यपालिका, न्यायपालिका चेति लोकतन्त्रस्य महत्त्वाधायि स्तम्भत्रयमिति तु सुविदितमेव।

साम्प्रतं पत्रकारिता चतुर्थ–स्तम्भत्वेन प्रतिष्ठितास्तीति कृत्वा अस्याः उद्भवः कदा सञ्जातः? अस्याश्च विकासयात्रा कीदृशी वर्तते? पत्रकारितायाः पत्रकारतायाः वा स्वरूपेण वयं किं किं बोद्धुं शक्नुमः? इत्यादिविषयाः

अध्यायेऽस्मिन् प्रस्तूयन्ते।

## 'पत्रकारिता' 'पत्रकारता' चेति शब्दयोः व्युत्पत्तिः सिद्धिश्च

पत्रं करोति तच्छीलमस्य इति विग्रहे कृते सति पत्रशब्दोपपदात् 'डुकृञ्करणे' इत्यर्थकाद् धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये /3/2/78/ इति सूत्रेण ताच्छील्यार्थे णिनि-प्रत्ययेऽनुबन्धलोपे पत्र+कृ +इन् इत्यवस्थायाम् 'आर्धधातुकं शेषः /3/4/114/ इत्यनेन सूत्रेणार्धधातुकत्वात् 'अचो ञ्णिति' /7/2/115/ इत्यनेन ऋकारस्य वृद्धौ सत्याम् 'उरण् रपरः' /1/1/51/ इति सूत्रेण रपरत्वे कृते 'पत्र+क्+आर+इन्' इति भूते प्रकृति-प्रत्ययसंयोगे पत्रकारिणो भाव कर्म वेति विग्रहे 'तस्य भावस्त्वतलौ '5/1/119/ इत्यनेन तल्प्रत्यये लकारस्यानुबन्धलोपे पत्रकारिन्+त इत्यवस्थायां 'नलोपः प्रातिपदिकान्तस्य' /8/2/7/इति सूत्रेण नकारस्य लोपे कृते सति 'पत्रकारित' इति स्थितौ 'तलन्तं स्त्रियामि'ति लिङ्गानुशासन-सूत्रेण तलन्तस्य स्त्रीत्वाधिकारे जाते 'अजाद्यतष्टाप्' /4/1/3/ इत्यनेन टापि प्रत्ययेऽनुबन्धलोपे 'पत्रकारित+आ' इति जाते 'अकः सवर्णे दीर्घः /6/1/101/इतिसूत्रेण सवर्णदीर्घे कृते 'पत्रकारिता' इति शब्दो निष्पन्नः। 'पत्रकारिता' अर्थात् पत्रपत्रिकाणां लेखन-पठन-मुद्रण-प्रकाशनादि-स्वभावत्त्वं कर्मत्त्वं वा।

### पत्रकारता

पत्रं करोतीति विग्रहे [अथवा पत्रं पत्रिकां वा लिखति लेखयति वा, पत्रं पत्रिकां वा प्रेषयति, प्रसारयति, मुद्रापयित्वा प्रकाश्य वा प्रसारयति सः पत्रकारः पत्रकारी वा (पत्रकारिन्)] पत्रशब्दोपपदात् डुकृञ्धातोः 'कर्मण्यण्' /3/2/1/इति सूत्रेण करोत्यर्थेऽण्-प्रत्यये अनुबन्धलोपे 'पत्र+कृ+अ' इति जाते 'आर्धधातुकं शेषः' /3/4/114/ इत्यनेन सूत्रेणार्धधातुकत्वात् 'अचो ञ्णिति' /7/2/115/ इत्यनेन ऋकारस्य वृद्धौ आकारे 'उरण् रपरः' /1/1/51/ सूत्रेण रपरत्वे कृते 'पत्र+क्+आर्+अ' इति सम्पन्ने प्रकृति-प्रत्ययसंयोगे 'पत्रकार' इति सिद्धम्। पत्रकारस्य भावः कर्म वेति विग्रहे पत्रकारशब्दात् 'तस्य भावस्त्वतलौ' /5/1/119/इत्यनेन तल्प्रत्ययेऽनुबन्धलोपे 'पत्रकार+त' इति जाते 'तलन्तं स्त्रियामिति

लिङ्गानुशासन–सूत्रेण स्त्रीत्वात् टापि अनुबन्धलोपे सवर्णदीर्घे 'पत्रकारता' शब्दो निष्पन्नः।

'पत्रकारता'– अर्थात् पत्रकारविशिष्टा वृत्तिः पत्रकारस्य कर्मत्वं भावत्वं वा। अतः 'पत्रकारिता' 'पत्रकारते'ति शब्दद्वयमपि समीहितार्थे समुचितमेव।

आरम्भे वार्तापत्राणां साहित्यिकपत्रिकाणां च लेखनप्रकाशन– मुद्रणेति कार्यार्थं 'पत्रकारिता' इति शब्दो हिन्दीभाषायां व्याहृतो व्यवहृतः प्रचलितश्च सन् लोकप्रियो जातः। अनन्तरं संस्कृतज्ञाः अपि वार्तानां लेखानाञ्च आहरण–संकलन–प्रकाशन–मुद्रणादि– कार्यार्थं 'पत्रकारिता– इति शब्दं प्रयोक्तुमारभन्त।

## पत्रकारितायाः लक्षणं महत्त्वञ्च

शब्दानुशासनानुसारेण वार्तानां लेखन–मुद्रण–प्रकाशन–प्रसारणबोधार्थं 'पत्रकारिता' इति शब्दो व्यापक–रूपेण स्वीकृतः परञ्च कर्ल.जी.मुगलरः 'Modern Journalism' इत्याख्ये स्वीयग्रन्थे लिखति यत् Journalism–इति शब्दः फ्रेञ्चभाषायाः जनी–शब्दात् व्युत्पद्यते।

जनीशब्दस्य अर्थघटनं भवति यत् प्रत्येकमपि दिवसस्य कार्य–विवरणस्य प्रस्तुतीकरणम्। एवं हि वक्तुं शक्यते यत् दैनन्दिन–जीवनस्य घटनानां प्रकाशनपराणां पत्राणां संवाहिका भवति पत्रकारिता।

'वैज्ञानिक–परिभाषाकोषे' डॉ.बद्रीनाथकपूरः लिखति यत्– ''पत्रपत्रिकाभ्यः वार्तानां सङ्कलनम्, लेखानाम् एकत्री–करणम्, तासां तेषाञ्च सम्पादनम्, ततश्च प्रकाशन–व्यवस्था एव पत्रकारिता अभिधीयते।''

''आधुनिक पत्रकारिता'' इति हिन्दीभाषिके पुस्तके लेखकः डॉ. अर्जुनतिवारी लिखति यत् विज्ञान–कला–शिल्पादीनां पवित्रः सङ्गमः एव पत्रकारितास्ति।

पत्रकारिता अद्यत्वे बृहत्तमोद्योगत्वेन व्यवसायत्वेन च परिज्ञायते। एतादृशोऽयं व्यवसायः यस्य माध्यमेन विचारशीलाः मनस्विनश्च पत्रकाराः स्वविचारैः जनमनांसि प्रभावयन्ति, विविधघटनानां वृत्तविश्लेषणपुरस्सरं जनान् परिचाययन्ति, समाजस्य समक्षं च घटनानां निष्पक्षं महत्त्वपूर्णं च विवरणम् उपस्थापयन्ति।

मानवजीवनस्य विविधैः पक्षैः सम्बद्धा पत्रकारिता मानवं समाजेन, समाजं राष्ट्रेण, राष्ट्रञ्च अन्ताराष्ट्रिय–वृन्देन संयोजयति। राष्ट्रियां भावनामुद्भावयति। कुप्रथामुन्मूलयति। अनैतिकतामुत्पाटयति। समाजं नागरिकान् च जागरयति।

### पत्रकारितायाः लक्ष्यम्

यथा वाङ्मयस्य लक्ष्यत्रयं विद्यते–'सत्यम्, शिवम्, सुन्दरम्।' तद्वदेव सञ्चार–माध्यमानां विशेषेण च पत्रकारितायाः लक्ष्यत्रयं वर्तते–

- सूचनाप्रदानम्– Information
- मनोरञ्जनम्– Entertainment
- शिक्षणम् (जागृतिप्रसारः)– Education

साम्प्रतिकस्य मानवजीवनस्य प्रत्येकमपि क्षेत्रे पत्रकारिता परिव्याप्तास्ति। इदानीन्तु पत्रकारिताविरहितस्य समाजस्य कल्पनापि दुष्करा प्रतीयते। एकविंशेऽस्मिन् शताब्दे यया त्वरितगत्या जीवनमूल्यानि विपरिवर्तन्ते, तानि संरक्षितुं जागृत– पत्रकारितायाः अतितरां महत्त्वं वर्तते।

### संस्कृतपत्रकारितायाः क्षेत्रे 'वार्ता'–शब्दस्य प्रयुक्तिः–

वार्ता अर्थात् वृत्तः वृत्तान्तो वा। शब्दकल्पद्रुमे अमरकोषे च वृत्तान्तः, संवादः, वार्ता, प्रवृत्तिः, उदन्तः, उदन्तकः, वृत्तः, श्रुतिः इत्यादयः पर्यायवाचिनः शब्दाः प्राप्यन्ते। यथा मेघदूते 'उदन्त'–शब्दस्य प्रयोगः–

"कान्तोदन्तः सुहृदुपनतः सङ्मात्किञ्चिदूनः।"

(श्लोकः–101)

महाभारतादिग्रन्थेषु 'का वार्ता किमाश्चर्यमि'ति नैकत्र 'वार्ता'–शब्दः प्रयुक्तोऽस्ति।

'मोहमुद्गरे' यथा–

यावद्वित्तोपार्जनशक्तः तावन्निजपरिवारो रक्तः।
पश्चात् जरया जर्जरदेहे वार्ता कोऽपि न पृच्छति गेहे।।

(मोहमुद्गरः–8)

'प्रसन्नराघवे' यथा 'वार्ता'–शब्दः–

वार्ता च कौतुकमयी विमला च विद्या,
लोकोत्तरः परिमलश्च कुरङ्गनाभेः।
तैलस्य बिन्दुरिव वारिणि दुर्निवारम्,
एतत्त्रयं प्रसरति स्वयमेव भूमौ।।

(प्रसन्नराघवम्–2/2)

हिन्दीभाषिकस्य 'समाचार'–शब्दस्य कृते एते वृत्तान्तादयः संस्कृत–वाङ्मये अनेकत्र प्रयुक्ताः सन्ति, परन्तु अद्यत्वे वार्ता–शब्दस्य प्रयोगो बाहुल्येन विधीयते।

विंशशताब्दस्य चतुःसप्ततितमे वर्षे (1974) जूनमासे त्रिंशत्तमात् दिनाङ्कात् आकाशवाणीतः संस्कृतवार्तानां नियतं पञ्चमिनटात्मकं प्रसारणमारब्धम्। मन्ये, तदनुवर्तिनि काले 'समाचार' इत्यस्य कृते वार्ताशब्दः समधिकः प्रसष्तो जातः। आकाशवाणी–दूरदर्शनयोः वार्ताप्रसारणेषु 'संवाददाता' इत्यस्य कृते 'वार्ताहरः', 'संवाददाता–

सम्मेलन', 'पत्रकारसम्मेलन' इति शब्दद्वयस्य च कृते 'वार्ताहर–सम्मेलनम्' इति प्रयुज्यते।

संस्कृतस्य विशाले वाङ्मये विपुलो ज्ञानराशिः, अनन्तश्च शब्दसंग्रहोऽस्ति। अतः प्रयोगदृशा अस्माभिः 'पत्रकारिता'–शब्दस्य प्रयुक्तिः समुचिता परिगणितास्ति।

**पत्रकारितायाः पृष्ठभूमिः कर्त्तव्यं च–**

पत्रकारिता नाम आधुनिकयुगस्य प्रमुखा उपलब्धिः वर्तते। वार्तानां आलेखानां च आहरणं संकलनं मुद्रणं प्रकाशनं इत्यादीनि कार्याणि वार्तापत्राणां पत्रिकाणां च प्रकाशने समाविष्टानि सन्ति एव, परञ्च कस्याश्चन प्रकाशितायाः वार्तायाः किं महत्त्वम् इत्यपि एतत् शिक्षयति। अत एव वार्तापत्रं लोकगुरुत्वेन ख्याप्यते।

अपि च मानवः सर्वदैव नावीन्यं मृगयते। अभिनवानि तथ्यानि वस्तूनि चावबोद्धुं सर्वदैव प्रयतते। मनुष्यस्य स्वाभाविकी इयं प्रवृत्तिः।

उदाहरण–माध्यमेन एवंरीत्या अवगन्तुं पार्यते यत् 'कस्मिँश्चित् स्थाने युद्धं प्रवर्तते –

- एतादृश्यां स्थितौ वार्तापत्रं वार्तापत्रिका वा किं करोति?
- युद्धविषयकं वृत्तं तु एतत् सूचयति एव, परं च, युद्धनिरतं पक्षद्वयं कथं युध्यते?
- कः कस्मिन् किमर्थं प्रथमं युगपदेव वा आक्रमत?
- अपरेषु देशेषु समाजेषु समुदायेषु वा अस्य युद्धस्य को नाम प्रभावः?
- एतद्विषयिणी सामाजिकानां सहृदयानां पाठकानां प्रबुद्धानां नागरिकाणां च का नाम प्रतिक्रिया?
- किमेतेषु देशेषु कतरः कतमश्च देशः युद्धनिरताभ्यां युद्धनिरतेभ्यश्च साहाय्यम् उपायनीकरोति?
- किं युद्धं शमयितुं केचन समुपायाः अपि विधीयन्ते?

एतदेव नैव, अपि तु, जगति कुत्रचित् युद्धाशङ्का प्रतीयते चेत् तस्य सूचनं विश्वसमाजस्य च तद्विषये प्रबोधनं वार्तापत्रस्य पत्रिकाणां च प्रमुख–कर्त्तव्यत्वेन वर्तते। एतादृशी एव वर्तते पत्रकारितायाः आरम्भस्य पृश्ठभूमिः।

**पत्रकारितायाः उद्भवस्य विकासस्य च आनुक्रमिकं स्वरूपम्**

पत्रकारिता नाम आधुनिक–युगस्य प्रमुखोपलब्धिः। युगेऽस्मिन् विविधैः वैज्ञानिकाविष्कारैः मानवीय–चेतनायाः विभिन्नाः पक्षाः सुप्रकाशिताः जाताः।

नूतनेऽस्मिन् वैज्ञानिकालोके साम्प्रतं वयं सौविध्यपूर्णं सुखकरं वैविध्यपूर्णं च जीवनं यापयामः, सांस्कृतिक–चैतन्यमुद्भावयामः आध्यात्मिकोन्नतिं चानुभवामः।

पत्रकारितायाः उद्भवस्य विकासस्य च आनुक्रमिक–स्वरूपस्य ज्ञानार्थं भागद्वये अस्य विषयस्य अध्ययनम् आवश्यकम्। तद्भागद्वयं वर्तते–

पत्रकारितायाः आरम्भिक–स्वरूपम्।

पत्रकारितायाः अधुनातन–स्वरूपम्।

इतः परं वयं पत्रकारितायाः आरम्भिक-स्वरूपं बोद्धुं इतिहासस्य काँश्चन प्रसङ्गान् पठामः।

## पत्रकारितायाः आरम्भिक-स्वरूपम्

भारते आधुनिकयुगस्य आरम्भः "पुनर्जागरणेन" सहैव जातः। अस्य पुनर्जागरणस्य कारणात् पाश्चात्त्यं विश्वम् अधिकाधिकम् अभिज्ञातुम् अवगन्तुं चास्मासु जिज्ञासा जागरिता। एतदर्थञ्च आङ्गलभाषायाः ज्ञानम् आवश्यकमजायत।

परिष्कारवाद्यान्दोलनस्य ( सुधारवादीआन्दोलन ) प्रमुखः संचालकः भारतीयनवजागरणस्य च उन्नायकः राजाराममोहनरॉयः तथ्यमिदं हृदि निधाय आङ्गलभाषायाः शिक्षाप्रचारस्य पक्षं समार्थयत। एवं हि, आधुनिकतायाः मूलवैशिष्ट्यस्य समग्रताम् आपाततः आत्मसात्कर्तुं समपेक्षिता भूमिका विनिर्मिता जाता।

आङ्गलशिक्षायाः कारणात् सम्पूर्णेऽपि देशेऽनुक्रमं सांस्कृतिक-परिवेशात्मकं परिवर्तनम् आरभत। अनेन जायमानेन परिवर्तनेन प्रभावितानां जनानां वर्गद्वयम् अभवत्।

अनयोरन्यतरो भारतीयवर्गः आधुनिकतां काञ्चित् नूतनां 'रीतिम्' (फैशन) गणयित्वा आङ्गलजीवन-पद्धत्या अभिभूतः सन् भारतीयताम् अन्यथाकर्तुम् आरभत। अपरश्च वर्गः सः आसीत् यो हि भारतीयशिक्षाराजनीत्यर्थ-नीति-विज्ञानादिभिः योरोपीयविश्वं प्रभावयितुं समैहत।

राजाराममोहनरॉयः तदानीन्तनेषु विशिष्ट-पत्रकारेषु अन्यतमोऽवर्तत येन एतादृशी प्रशस्ता परम्परा प्रतिष्ठापिता या हि आधुनिकभारतस्यैव नैव, अपितु सम्पूर्णमानवतायाः कृते उपकारिणी सिद्धा।

आङ्गलशासिते भारते प्रशासनस्य अनुदारनीतिभिः भारतीयाः प्रपीडिताः आसन्। राजाराममोहनरॉयः परिष्कारवाद्यान्दोलनम् आरभ्य नूतनान् विचारकान् परिष्कारकर्तॄन् च सम्प्रैरयत्। एवं हि, तदानीन्तने काले एकतः सामाजिक-कलुष-प्रक्षालनार्थम् उपक्रम्यते स्म, अपरतश्च अस्मदीया सामाजिकी चेतना प्रखरत्वं भजते स्म। तदा आर्थिक-सामाजिक-

राजनीतिक–परिष्कारहेतोः आरब्धान्दोलनस्य समधिक–सक्रियतायाः सततं प्रवर्त्तनार्थं स्वाधीनानां वार्तापत्राणां प्राथमिकी आवश्यकता अनुभूता।

विशिष्टामवधारणामेनां मनसि आधाय तेन आङ्ग्ल–बाङ्गला–फारसी–हिन्दीभाषासु अनेकानि वार्तापत्राणि प्रकाशयितुमारब्धम्। एतत्पूर्वम्, प्रथम–स्वातन्त्र्य–संग्रामात् (1857) प्राक् कोलकोतातः अनेकाः हिन्दी–भाषिकाः पत्र–पत्रिकाः प्रकाशिताः यासु 'बंगदूत', 'प्रजामित्र', हिन्दीभाषिकं प्रथमं दैनिकपत्रम् 'उदन्तमार्तण्ड', 'समाचारसुधावर्षण' चेति अन्यतमाः सन्ति। तथ्यमिदमाधृत्य डॉ.सुनीतिकुमार–चट्टोपाध्यायः अलिखत् यत् ''यदि कलकत्ते को हिन्दी की आधुनिक गद्यशैली की जन्मभूमि कहा जाए तो कुछ अत्युक्ति न होगी।'' [ यदि वयं कोलकोतानगरीं हिन्दीभाषायाः आधुनिकगद्यशैल्याः जन्मभूमिं वदामश्चेदत्र नास्ति काचित् अतिशयोक्तिः।]

विंशतितमस्य शताब्दस्य आरम्भिकदशाब्दद्वयस्य हिन्दीपत्रकारितायाः मूलस्वरः उग्रराष्ट्रीयता एवासीत्। भाषान्दोलनमपि पत्रकारितायाः माध्यमेन सततं बलवत्तरं जातम्। युगपदेव लिप्यान्दोलनमपि आरब्धम्, यद्धि व्यापकतया प्रसारयितुं 1906 तमे वर्षे कोलकोतातः एव 'देवनागर' इति वार्तापत्रं प्राकाश्यमानीतम्। एवं प्रतीयते यत् भारतीयपत्रकारितायाः इतिहासोऽयम् अभूतपूर्वः अप्रतिमप्रयोगपूर्णश्चावर्त्तत। अनन्तरम्, गान्धियुगस्य पत्रकारितया सहैव हिन्दीभाषायाः साहित्यिकपत्रकारिता समुद्भूता।

अत्रेदं स्मरणीयं यत् यथा राजाराममोहनरॉयतः जवाहर–लालनेहरुं यावत् ततः परं डॉ.राममानोहरलोहियां यावत् च आधुनिक–भारतीय–राष्ट्रियतायाः प्रायः प्रत्येकं रचनाकारः पत्रकारोऽपि अवर्तत, तथैव आधुनिक–हिन्दी–साहित्यस्य समधिकाः श्रेष्ठाः लेखकाः, यत्र कुत्रापि, येन केनापि प्रकारेण च पत्रकारितया सम्पृक्ताः आसन्। परम्परेयं भारतेन्दुहरिश्चन्द्रतः सच्चिदानन्द–हीरानन्दवात्स्यायन– 'अज्ञेयं' यावत् स्पष्टा दृश्यते।

पत्रकारितायाः आरम्भिकस्वरूपे आङ्ग्लभाषायाः पत्र–
पत्रिकाणामपि महती भूमिका नैव विस्मरणीया।
इतिहासोऽयमतितरां बृहद् वर्तते परञ्चात्र एतन्नूनमवगन्तव्यं यत्

नियतरूपेण आङ्ग्लभाषायां प्रकाशितेषु वार्तापत्रेषु 1620 तमे वर्षेऽन्तिमचरणे प्रकाशितं 'एमस्टर्डम्' इति प्रथमं वार्तापत्रम् अवर्त्तत।

एवं हि 1702 मिते वर्षे मार्चमासे एकादशेऽहनि प्रकाशितं ''कोरांट्'' इत्याङ्ग्लभाषिकं प्रथमं दैनिकपत्रम् अवर्त्तत।

एवं हि, 1826 तमे वर्षे मेमासस्य त्रिंशत्तमे दिनाङ्के देवनागरीलिप्यां हिन्दीभाषिकं प्रथमं साप्ताहिकं पत्रं 'उदन्तमार्तण्ड' पं.युगलकिशोरशुकुलेन आरब्धम्। एतदनन्तरम् 1829 तमे वर्षे मे–मासे दशमे दिनाङ्के 'बंगदूत'–नामकं पत्रं प्रकाशितम्। 1854तमे वर्षे कोलकोतातः 'समाचारसुधावर्षण' इति दैनिकं पत्रं प्राकाश्यमानीतम्। तदनु अनेकाः हिन्दीभाषिकाः पत्र–पत्रिकाः आरभन्त। अपरत्र संस्कृत–पत्रकारितायाः क्षेत्रेऽपि अशेषदेशे विरलतया पत्र–पत्रिकाणां प्रकाशनं जायते स्म। 1866 तमे वर्षे जूनमासस्य प्रथमदिनाङ्कात् 'काशीविद्यासुधानिधिः' इति संस्कृत–पत्रिकायाः प्रकाशनपुरस्सरं संस्कृत–पत्रकारितायाः शुभारम्भो जातः। अनन्तरम्, 1869 तमे वर्षे श्रीमता बटुहृषीकेशेन 'विद्योदयः' नामकं संस्कृतमासिकं प्रकाशयितुमारब्धम्। अस्य पत्रस्य प्रकाशनेन सहैव संस्कृत–पत्रकारितायां व्यङ्ग्यशैली प्रवर्तिता जाता।

'विद्योदयः' इति पत्रं स्वलोकाभिमुखप्रवृत्त्या ओजःपूर्णया भाषया च प्रशंसनीयं सर्वत्र सुप्रसिद्धिं गतम्। तत्रान्तरे, अनेकाः पत्रिकाः प्रकाशिताः जाताः परञ्च संस्कृतपत्रकारितायाः इतिवृत्ते उल्लेखनीयं शट्त्रिंशद्वर्षाणाम् अन्तरालानन्तरम्, त्रिवेन्द्रम्तः 1907 तमे वर्षे जूनमासे प्रथमे दिनाङ्के 'जयन्ती' इति प्रथमं संस्कृत–दैनिक–पत्रं प्रकाशितम्, यद्धि कतिपयानाम् अङ्कानां प्रकाशनानन्तरं अवरुद्धम्।

एवं हि, महीयोऽस्ति विभिन्नानां भाषिकीणां पत्रपत्रिकाणामितिवृत्तम्।

## पत्रकारितायाः अधुनातन–स्वरूपम्

'हिन्दीपत्रकारिता के विविध आयाम' इतिग्रन्थे लिखितं यत् आधुनिकपत्रकारितायाः आरम्भः सप्तदशशताब्दस्य अन्तिमचरणे अजायत। प्रायेण इदन्तु विश्वपत्रकारितायाः क्षेत्रे समुचितमेव परञ्च भारतस्य सन्दर्भे

विषयमेनं सारल्येन अवगन्तुं कालविभाजनं त्रिधा करणीयम्। तदेवम्, प्राक्–स्वातन्त्र्यकालिकी पत्रकारिता, स्वातन्त्र्योत्तरवर्तिनी पत्रकारिता, साम्प्रतिकी च पत्रकारिता।

भारतीयस्वातन्त्र्यात् परम् अपि हिन्दीभाषायां आङ्ग्लभाषायाम् संस्कृतभाषायां च अनेकाः पत्रपत्रिकाः प्राकाश्यमागताः। परञ्चात्र एतद् ध्यातव्यं यत् स्वातन्त्र्यावाप्तेः प्राक् भारतीयपत्रकारितायाः मुख्यस्वरः आसीत् राष्ट्रियतायाः गौरवस्य पुनः प्रतिष्ठापनम्, आङ्ग्लशासनाच्च विमुक्तिः।

विभिन्नभाषाभाषिकीभिः पत्रपत्रिकाभिः तल्लक्ष्यम् अधिगतम्, परं कालानुक्रमेण स्वातन्त्र्योत्तरकालिकी पत्रकारिता समधिका व्यवसायोन्मुखी सञ्जाता। विंशशताब्दस्य अन्तिमचरणे सञ्जातायाः सूचनाक्रान्तेः कारणात् साम्प्रतम् आधुनिकपत्रकारितायां वैविध्यं दरीदृश्यते। एकस्यामेव भाषायां प्रकाश्यमानस्य पत्रस्य, विभिन्नान् विषयान् आधृत्य पृथक्–पृथक् अङ्काः ( संस्करणानि ) प्रकाश्यन्ते। एतेषु विषयेषु बालपत्रकारिता, क्रीडापत्रकारिता, वाणिज्यपत्रकारिता, विज्ञानपत्रकारिता, कृषिपत्रकारिता, चलचित्रपत्रकारिता, युवपत्रकारिता, महिलापत्रकारिता, धार्मिकपत्रकारिता, आध्यात्मिक–पत्रकारिता, ब्रेलपत्रकारिता, सर्वोदयपत्रकारिता चेत्यादयः अन्तर्भाविताः भवन्ति। अत्र छायाङ्कन–पत्रकारिता ( फोटोजर्नलिज्म) अपि अन्यतमास्ति। एतदतिरिच्य दृश्यपत्रकारिता–श्रव्यपत्रकारितयोः रेडियो–दूरदर्शनेति प्रबलतरस्य प्राविधिक–( Technological ) माध्यमद्वयस्य महती भूमिका नोपेक्षितुं शक्यते।

एवं हि सूचना–प्रविध्योः क्रान्तेः परिणामत्वेन कम्प्यूटरीकृते विश्वव्यापिनि अन्तर्जाले स्थापिताः नाना ई–पत्रपत्रिकाश्चापि आधुनिक–पत्रकारितायाः अङ्गीभूताः सन्ति।

वेब्साइट्स् इति वैद्युदाणविकप्रणालीः आधृत्य 'पोर्टल्' इति अन्तर्जालिक–पत्र–माध्यमेन कस्याञ्चिदपि भाषायां विश्वस्य कस्मिन्नपि भागे स्थितो जनः अहर्निशं अन्तर्जालमाध्यमेन (इण्टरनेट्–द्वारा) तद् द्रष्टुं तच्च पठितुं तच्च श्रोतुमर्हति। एतदस्ति वैचित्र्यम् अप्रतिमञ्च स्वरूपं साम्प्रतिक्याः पत्रकारितायाः।

साम्प्रतं तु दृश्यप्रसारणावृत्तयः (टीवीचैनल्स्) अहर्निशं वार्ताः प्रसारयन्ति। वैश्विकग्रामस्य (ग्लोबल्विलेज्) अवधारणायाः कारणात् अनेकविधायाः पत्रकारितायाः स्वरूपाणि अतितरां व्यापकानि वैविध्यपूर्णानि चावलोक्यन्ते।

संचार–माध्यमानां वैद्युदाणविकोपकरणानां च सुलभतया अद्यत्वे अल्पशिक्षितो बहुशिक्षितो वा जनः सर्वदैव पत्रकारितया सार्धं जानता अजानता वा सम्पृक्तोऽस्ति– इत्यत्र नास्ति सन्देहलेशः। आदिकवेः वाल्मीकेः हनुमद्–दूतत्वद्वारा उद्भाविता कालिदासस्य च मेघदूतत्वेन सन्देश–सम्प्रेषणार्थं परिपुष्टा एषा प्राचीनतमा प्रवृत्तिः साम्प्रतिके एकविंशे शताब्दे पूर्णतया विकसिता पल्लविता चास्ति। अभिकाङ्क्षामः यत् प्राचीनतमा सतीयम् अधुनातना प्रवृत्तिः उत्तरोत्तरं समेधतामिति।

---

# द्वितीयोऽध्यायः

## संस्कृत–पत्रकारितायाः उद्भवः विकासश्च

**प्रस्तावना**

'संस्कृत–पत्रकारितायाः उद्भवः विकासश्च' इति अध्याये प्राक्–स्वातन्त्र्यकालिकी, स्वातन्त्र्योत्तर–कालिकी आधुनिकी च संस्कृतपत्रकारिता संक्षेपेण वर्ण्यते, येन हि, संस्कृत–पत्रकारितायाः विकास–यात्रा कीदृशी अवर्तत इति सारल्येन बोद्धुं शक्ष्यते।

अनुक्रमं वैज्ञानिकाविष्काराणां समेधित–संख्याकारणात् मानवीय–जीवने महत् परिवर्तनं समापन्नम्। कर्गदस्य मुद्रणयन्त्रस्य च आविष्कारेण पुस्तकानां पत्र–पत्रिकाणां च मुद्रणं प्रकाशनं च सुकरं जातम्।

यथा वयं जानीमः यन्मानवः सर्वदैव नावीन्यं मृगयते। नूतनानि तथ्यानि, नवीनाश्च घटनाः ज्ञातुं सर्वदैव औत्सुक्यं संधारयति। प्रशासनम्, लोकतन्त्रं भवतु वा राजतन्त्रम्, स्वीय–नागरिकाणां सूचनार्थं बोधार्थं च उद्घोषणां कारयति, सन्देशोद्घोषणादिकं लिखित्वा पत्रादिकं च प्रेषयति।

'रामचरितमानसे' गोस्वामिना तुलसीदासेन वर्णितं यत् दशरथ–मृत्योरनन्तरं वृत्तमेतत् कुमाराय भरताय ज्ञापयितुं धावकाः प्रेषिताः आसन्–

'दूत बोलाइ बहुरि अस भाषा।
धावहु बेगि भरत पहिं जाहू।
नृप सुधि कतहुँ कहहु जनि काहू।
सुनि मुनि आयसु धावन धाए।
चले बेग बर बाजि लजाए।'

('अयोध्याकाण्ड'– दोहा– 157)

एवं हि, 'मेघदूतम्' नाम खण्डकाव्यं तु सुप्रसिद्धमेव यस्य विषये सर्वोऽपि जनो जानाति यन्महाकविना कालिदासेन स्वीयानुपम–शैल्या यक्षस्य विरहसन्देश–प्रेषणार्थं मेघोऽभ्यर्थितः।

'अभिज्ञानशाकुन्तलम्' नाम्नि नाटकेऽपि शकुन्तला स्वीय–मनोगतान् भावान् प्रकटयितुं राजानं दुष्यन्तमुद्दिश्य पत्रमेकं लिखति। प्राक्काले भारतवर्षे जगति अन्यत्र च वार्ता–प्रेषणार्थमनेके जनाः कार्यरताः आसन् तेषु दूत–चर–भाट–धावक–प्रभष्तयोऽन्यतमाः वर्तन्ते।

जगति विभिन्नासु भाषासु पत्रकारितायाः उद्भवः विकासश्च अनुक्रमं शनैः शनैः अजायत, परं च संस्कृत–पत्रकारितायाः कृते स्थितिः किञ्चिद् भिन्ना अवर्तत।

एषास्ति देववाणी, प्राचीनतमा भाषा, पूर्णा, गणितात्मिका वैज्ञानिकी च। अतः संस्कृतभाषायाः प्रकृतिमवगन्तुं भाषाविज्ञानिनः, 'वैदिक–संस्कृतम्', 'लौकिक–संस्कृतम्' इति द्विधा विभज्य अस्याः भाषायाः वाङ्मय–विस्तरजातं ख्यापयन्ति। एवंविधे वैदिके लौकिके च संस्कृत–वाङ्मये वार्ताहरणम्, वृत्तप्रेषणम्, संवादसंचयः, उद्घोषणा–ज्ञापनम्, सन्धि–हस्ताक्षराङ्कनम्, सामञ्जस्य–पत्राणां च मुद्रया प्रमाणीकरणम् इत्यादि–विषयाः समुपलभ्यन्ते।

सम्राजा अशोकेन गुहाभित्तिषु, शिलासु प्रस्तर–खण्डेषु च सर्वजनहिताय स्वसूचनाः उत्कीर्य प्रसारिताः।

एवं हि, अनुक्रमम् आधुनिकी पत्रकारिता समुद्भूता। संस्कृत–पत्रकारिता शनैः शनैः समृद्धा सती साम्प्रतं स्वीयं विशिष्टं स्थानमावहतीति तु सुसिद्धमेव।

**संस्कृत–पत्रकारितायाः संक्षिप्तम् इतिवृत्तम्**

संस्कृत–पत्रकारितायाः विशिष्टा परम्परा वर्तते। कस्याश्चन पत्रपत्रिकायाः मुख्यं लक्ष्यं भवति– विभिन्नानां घटनानां जनानां वा विषये वैविध्यपूर्णानां वृत्तानां प्रकाशनम् उपस्थापनञ्च। तच्च पत्रं पत्रिकां वा लिखित्वा सम्प्रेष्य मुद्रापयित्वा च कर्तुं शक्यते। विश्वेतिहासे समुल्लेखोऽस्ति यत् सर्वप्रथमं मोसोपोटामिया–प्रदेशस्य राज्ञा डेरियस–इत्यनेन स्व–सूचना–प्रसारार्थं शिलासु लेखाः उत्कीर्णाः।

भारतेऽपि सम्राजा अशोकेन गुहाभित्तिषु, शिलासु, पाषाणस्तम्भेषु च स्वसूचनाः राजाज्ञाश्च उत्कीर्य सर्वजनहितार्थं प्रसारिताः।

एवं हि, ताम्रपत्रेषु, ताडपत्रेषु वस्त्रेषु च नैकविधाः लेखाः लिखिताः

अवाप्यन्ते। एतत्सर्वमपि वस्तुजातं पत्र–पत्रिकाणाम् आहोस्वित् पत्रकारितायाः प्राक्तनं स्वरूपं नूनं प्रकटयति।

एतत्तु सुविदितमेव यत् संस्कृतभाषायाः कथावाङ्मयम् अतितरां प्राचीनम्। वैदिक–कथाः जगतः प्राचीन–तमोपन्यासत्वेन वक्तुं शक्यन्ते। एवं हि, लोककथानां पशुपक्षिणां च कथानामितिहासोऽपि संस्कृत–साहित्ये सुतरां प्राचीनतमां पदवीं भजते। पञ्चतन्त्रं नाम जगतः प्राचीनतमः कथासंग्रहः। परं च, लघुकथा (Short Story) इति या रीतिः निगद्यते, एतस्याः शुभारम्भस्तु पाश्चात्त्य–प्रभावेण एव कैश्चित् स्वीक्रियते। अपि चायं शुभारम्भः ऊनविंशशताब्दस्य उत्तरार्धे जातः इति डॉ.राघवन्–प्रभृतयः विद्वांसः आमनन्ति। तत्रान्तरे, 'संस्कृत–वाङ्मय का इतिहास' इत्यत्र आधुनिक–कालसन्दर्भे देवर्षि–कलानाथशास्त्री निगदति यत् ''लघुकथा–लेखनस्यायं प्रभावः साक्षात् पाश्चात्त्यभाषाभ्यो नैव, अपि तु बाङ्ग्ला–प्रभृति–भारतीयभाषाणां माध्यमेन समापन्नः। अत्र सर्वाधिकमवदानम् आसीत् संस्कृत–पत्रकारितायाः, यस्याः कारणात् लघुकथादि–रचनाः प्रकाशयितु–मारब्धाः।''

'विद्योदयः' (1871 ई.), 'संस्कृत–चन्द्रिका' (1893 ई.), 'संस्कृत–रत्नाकरः' (1904 ई.) बंगालस्य संस्कृतसाहित्यपरिषत्पत्रिका इत्यादिषु राष्ट्रस्य संस्कृतकवि–लेखक–पत्रकाराणां कथा–साहित्यं प्राकाश्यम् आगतम्। यद्यपि भारते सर्वप्रथमं संस्कृत–पत्रिकाणां विवरणं डॉ.अर्नेस्टहॉसः प्रादात्। तेन पत्रिकाद्वयस्य सामान्यपरिचयः प्रदत्तः।

अनन्तरम्, मैक्समूलरः स्वकीयग्रन्थे संस्कृतस्य अध्ययनाध्यापनविषयकं बृहदुल्लेखम् अकरोत्। तेन लिखितं यत् ''संस्कृतमेवैका एतादृशी भाषास्ति या अद्यापि देशस्य एकस्मात् प्रदेशात् अन्यप्रदेशं यावत् जनैः भाष्यते अवगम्यते च।''

एल्.डी.बर्नेट्–इत्यनेन स्वकीये ग्रन्थे पत्र–पत्रिकाणां यथाशक्यं विवरणं प्रदत्तम्। विवरणमिदम्, 1886 ई.–तः 1928ई. वर्षं यावत् प्रकाशितानां पत्र–पत्रिकाणामेव अस्ति।

विद्यावाचस्पतिः अप्पाशास्त्रिराशिवडेकरः मासिकपत्रिकामेकां सम्पादयति

स्म, यस्याः नामासीत्– 'संस्कृत–चन्द्रिका।' अस्यां पत्रिकायां सर्वप्रथमं अनेकासां संस्कृत–पत्र–पत्रिकाणां विस्तृतं विवरणं समीक्षणं च लभ्यते।

1907ई वर्षे विन्टर्‌नित्सः संस्कृत–पत्र–पत्रिकाणाम् अमूल्यम् अवदानं समर्थितवान्। 1913 ई.वर्षे 'संस्कृतरत्नाकर'–नाम्नी मासिक–पत्रिका 'वासन्तिक–प्रमदः' इत्याख्ये लेखे अनेकासां प्राचीनानां संस्कृत–पत्र–पत्रिकाणां नामोल्लेखमकरोत्।

अनन्तरम्, गुरुप्रसादशास्त्रि–दीनानाथशास्त्रि–सारस्वत–एम्. कृष्णामाचारियार–आर्.एन्.दाण्डेकर–चिन्ताहरण–चक्रवर्ति–वी.राघवन्–शंकरलालशर्म–गणेशरामशर्म–रामगोपालमिश्र–श्रीधरभास्करवर्णेकर–राधावल्लभत्रिपाठिनां ग्रन्थेषु लेखेषु च संस्कृत–पत्र–पत्रिकाणां विस्तृतं विवरणं लभ्यते।

डॉ.रामगोपालमिश्रः "संस्कृत–पत्रकारितायाः इतिहासः" इति स्वीय–शोधप्रबन्धे 1960ई. वर्षं यावत् प्रकाशितानां प्रकाश्यमानानां च संस्कृत–पत्रपत्रिकाणां विस्तृतं विवरणं प्रादात्।

संस्कृत–पत्रकारिता इतरभाषाणामपेक्षया किञ्चित् विशिष्टं महत्त्वमावहति। संस्कृत–पत्र–पत्रिकाणां माध्यमेनैव अद्यापि कन्याकुमारीतो हिमालयं यावत् भारतं सांस्कृतिकम् आध्यात्मिकं भौगोलिकं च ऐक्यमनुभवति। सर्वेषु राज्येषु संस्कृतं पठितं लिखितं मुद्रितं प्रकाशितं च सत् व्यवहृतम् अक्षिलक्ष्यीक्रियते यतो हि एतत् अमृतं वर्तते।

## प्राक्–स्वातन्त्र्यकालिकी संस्कृत–पत्रकारिता

आधुनिके स्वतन्त्रे भारते संस्कृत–पत्रकारिता–

क्षेत्रे अनेकाः नूतनाः मासिक्यो, द्विमासिक्यः, साप्ताहिक्यः, पाक्षिक्यश्च संस्कृतपत्रिकाः प्रकाश्यन्ते, परं च स्वातन्त्र्यावाप्तेः प्राक् स्थितिरेतादृशी नैवासीत्।

संस्कृते दैनिकवार्तापत्रस्य प्रकाशनं सर्वथा दुष्करं कार्यम्, तदपि 1907तमे वर्षे जान्युआरि–मासस्य प्रथमदिनाङ्कात् 'जयन्ती'– इत्याख्यं प्रथमं संस्कृत–दिनपत्रं केरलराज्यस्य त्रिवेन्द्रम्–नगरात् प्रकाशितमासीत्।

कोमलमारुताचार्यः लक्ष्मीनन्दस्वामी च अस्य संस्कृतदिनपत्रस्य सम्पादकौ आस्ताम्। परं च वित्तस्य ग्राहकाणां च अभावात् कतिपय–दिवसानन्तरमेव अस्य प्रकाशनं स्थगितम्।

संस्कृत–पत्रकारितायाः इतिहासे इदं नूनमवधेयं यत् संस्कृत–पत्रपत्रिकाणां विकासः प्रायेण मासिक–पत्रिकाणां प्रकाशनेन सहैव आरब्धः। 1866 तमे वर्षे जूनमासस्य प्रथम–दिनाङ्कात् 'काशीविद्यासुधानिधिः' इति प्रथमा संस्कृत–मासिक–पत्रिका काशीतः प्रकाशिता। अस्याः पत्रिकायाः अपरं नाम –'पण्डितः' आसीत्। अस्याः पत्रिकायाः प्रमुखोद्देश्यमासीत् दुर्लभानाम् अप्रकाशितानां च ग्रन्थानां प्रकाशनम्। अस्यां पत्रिकायामनेके प्राचीनाः प्रामाणिकाः संस्कृत–ग्रन्थाः प्रकाशिताः।

एतदनन्तरम्, 1871तमे वर्षे 'विद्योदय'–नाम्नी संस्कृतस्य मासिकपत्रिका प्राकाश्यमागता। अनया सहैव संस्कृत–पत्रिकासु व्यङ्ग्यशैली अपि आरब्धा। अस्मिन्नेव वर्षे पटना–जनपदस्य बांकीपुरात् दामोदरशास्त्रिणा 'विद्यार्थी' इत्याख्या संस्कृत–मासिकपत्रिका प्रकाशयितुमारब्धा। 1875तमे वर्षे 'षड्–दर्शनचिन्तनिका', 'प्रयागधर्म–प्रकाशः', 'षड्धर्मामृतवर्षिणी' इति पत्रिकात्रयस्य प्रकाशनमारब्धमिति इतिहासविद्भिः स्वीक्रियते।

1879तमे वर्षे 'कामधेनुः' इति संस्कृत–पत्रिका प्रकाशिता जाता। एतदनु, 1881 तमे वर्षे 'विद्यार्थी'त्येषा दामोदरशास्त्रिणः सम्पादकत्वे प्रकाश्यमाना मासिकी संस्कृतपत्रिका पाक्षिक–संस्कृत–पत्रिकारूपेण उदयपुरात् प्रकाशयितुमारब्धा।

1882तमे वर्षे 'काव्यनाटकादर्श' नाम्नी संस्कृत–पत्रिका आरब्धा, यस्यां काव्यानां विशेषेण च नाटकानां प्रकाशनं क्रियते स्म।

1883 तमे वर्षे 'आर्यः' 'धर्मोपदेशः' इत्यपरं संस्कृत–पत्रिकाद्वयं प्रकाशयितुमारभत।

1885तमे वर्षे 'ब्रह्मविद्या' इत्याख्यायाः संस्कृत–पत्रिकायाः प्रकाशनं जातम्।

1887तमे वर्षे पं.अम्बिकादत्तव्यासेन संस्कृतशिक्षापद्धतेः परिष्कारार्थं बिहार–संस्कृत–संजीवनसमाजः स्थापितः। अस्मिन्नेव वर्षे संस्कृत–

बाङ्ग्ला–भाषयोः मिश्रितं "द्वैभाषिक"मित्याख्यं पत्रमारभत यस्मिन् आधुनिक–काव्यानां महत्त्वाधायी स्तम्भः आसीत्।

1888 तमे वर्षे 'विद्यामार्तण्डः', 'ग्रन्थमाला', 'आर्यसिद्धान्तः' इति संस्कृत–पत्रिकात्रयं प्रकाशितम्। 1889 तमे वर्षे 'उषा' नाम्नी संस्कृतपत्रिका आरब्धा। 1891 तमे वर्षे 'मानवधर्म–प्रकाशः' 1893 तमे च वर्षे 'संस्कृतचन्द्रिका' इति संस्कृतपत्रिके प्राकाश्यमागते। पण्डित–अम्बिकादत्तव्यासेन लिखितः 'शिवराज–विजयः' इति प्रथमसंस्कृतोपन्यासः 1893तमे एव वर्षे प्रकाशितः। अस्योपन्यासस्य प्रकाशनेन सहैव संस्कृत–वाङ्मये कथा–साहित्यलेखन–परम्परा पुनरुज्जीविता।

1895तमे वर्षे 'कविः' नाम्नी मासिक–संस्कृतपत्रिका आरब्धा। अस्मिन्नेव वर्षे 'प्रयाग–पत्रिका', 'आर्यावर्त्ततत्त्ववारिधिः' 'श्रीवेङ्कटेश्वर–संस्कृतपत्रिके'ति संस्कृतपत्रिकात्रयस्य प्रकाशनमारब्धम्।

1896तमे वर्षे मातृभक्तिविषयिण्यां काव्य–निबन्ध–लेखन–स्पर्धायाम् अप्पाशास्त्रीराशिवडेकरः 'संस्कृतचन्द्रिके'ति संस्कृतपत्रिकया श्रेष्ठलेखकत्वेन प्रथमपुरस्कारप्रदानपुरस्सरं सभाजितः। अस्मिन्नेव वर्षे 'सहृदया' इति संस्कृतपत्रिका आरब्धा।

1897तमे वर्षे 'काव्यकादम्बिनी', 'संस्कृत–ग्रन्थमाला', 'काव्यमाला', 'काव्यकल्पद्रुमः', 'भारतोपदेशकः' इति संस्कृत–पत्रिका–पञ्चकस्य प्रकाशनमारब्धम्।

1899तमे वर्षे अनन्ताचार्यः 'शास्त्रमुक्तावली'ति संस्कृतपत्रिकां प्रकाशयितुमारभत। अस्मिन्नेव वर्षे 'विद्वत्कला', 'साहित्यरत्नावली' इति संस्कृतपत्रिकाद्वयं प्रकाशितम्।

1900तमे वर्षे 'देवगोष्ठी', 'विद्यार्थीचिन्तामणिः' इति संस्कृतपत्रिके प्राकाश्यमागते। अस्मिन्नेव संवत्सरे 'मञ्जुभाषिणी' इति प्रथमायाः संस्कृत–साप्ताहिक्याः प्रकाशनमारब्धम्।

1901तमे वर्षे 'भारतधर्मः', 'ग्रन्थप्रदर्शिनी', 'श्रीकाशी' इति संस्कृत–पत्रिकात्रयस्य प्रकाशनमारब्धम्। अस्मिन्नेव वर्षे संस्कृतपत्रकारः श्रीनिवासशास्त्री प्राणान् अत्यजत्।

1902तमे वर्षे 'रसिकरञ्जिनी' इत्याख्या संस्कृतपत्रिका आरब्धा। अस्मिन्नेव वर्षे 'विद्यार्थी–चिन्तामणिः' इति संस्कृतपत्रिकायाः साप्ताहिकं प्रकाशनमारब्धम्।

1903तमे वर्षे भवानीप्रसादशर्मा काशीतः 'सूक्तिसुधा' इत्यस्याः मासिकसंस्कृतपत्रिकायाः प्रकाशनमारभत। अस्मिन्नेव वर्षे 'वैष्णवसन्दर्भः' इति संस्कृतपत्रिका प्रकाशिता।

1904 तमे वर्षे रामावतारशर्मणः विधुशेखरभट्टाचार्यस्य च संयुक्त–सम्पादकत्वे काशीतः 'मित्रगोष्ठी' इति मासिकी संस्कृतपत्रिका प्रकाशिता।

1905तमे वर्षे 'मिथिलामोदः', 'विशिष्टाद्वैतिनी', 'विद्वद्गोष्ठी' इति संस्कृत–पत्रिकात्रयं प्रकाशितम्।

1906तमे वर्षे 'सूनृतवादिनी' इति साप्ताहिकी संस्कृतपत्रिका काशीतः प्राकाश्यमागता। अस्मिन्नेव वर्षे 'केरल–ग्रन्थमाला', 'सद्धर्मः', 'प्रकटनपत्रिका', 'वीरशैवप्रभाकरः', 'बालमनोरमा', 'विद्यावती', 'वीरशैवमतप्रकाशः', 'विश्वश्रुतः', 'विद्वन्मनोरञ्जनी' इत्यादयः संस्कृतपत्रिकाः प्रकाशिताः।

1907तमे वर्षे जूनमासस्य प्रथमदिनाङ्कात् त्रिवेन्द्रम्–तः 'जयन्ती'–नाम्नः प्रथमस्य संस्कृतदिनपत्रस्य प्रकाशनमजायत। अस्मिन्नेव वर्षे 'षड्दर्शिनी', 'संस्कृतम्' इति पत्रिकयोः प्रकाशनं जातम्।

1909तमे वर्षे सुख्यातः संस्कृत–पत्रकारः दामोदरशास्त्री प्राणान् अत्यजत्।

1913तमे वर्षे चन्द्रशेखरशास्त्रिणा प्रयागतः 'शारदा' इति संस्कृतस्य मासिकपत्रिका आरब्धा। अस्मिन्नेव वर्षे सुख्यातः संस्कृतविद्वान् पत्रकारश्च ऋषीकेशशास्त्री–भट्टाचार्यः प्राणान् अत्यजत्। पत्रकारः संस्कृतविद्वान् च अप्पाशास्त्रीराशिवडेकरः वर्षेऽस्मिन् दिवंगतः। अस्मिन्नेव वर्षे 'चित्रवाणी', 'कवित्वम्', 'आयुर्वेदपत्रिका', 'मञ्जरी', 'प्राचीनवैष्णवसुधा', 'धर्मचक्रम्', 'अमृतवाणी', 'संस्कृतकौमुदी', 'सुरभारती' इत्यादयः संस्कृतपत्रिकाः प्रकाशिताः।

1914तमे वर्षे 'बहुश्रुतम्' नाम्नः संस्कृतपत्रस्य प्रकाशनं जातम्।

1915तमे वर्षे 'गीर्वाणभारती'ति संस्कृतपत्रिकायाः प्रकाशनम् आरब्धम्।

1918तमे वर्षे 'संस्कृतसाहित्यपरिषद्' इति मासिक–संस्कृत–पत्रिकायाः कोलकोतातः प्रकाशनम् अभवत्।

1920तमे वर्षे अयोध्यायाम् अखिलभारतीयविद्वत्परिषद् संस्थापिता। अनया परिषदा 'संस्कृतसाकेतः' इति मासिकी संस्कृतपत्रिका आरब्धा, या हि अनन्तरं महात्मगान्धिनः अहिंसात्मकान्दोलनस्य केन्द्रबिन्दुत्वेन अवर्तत। अस्मिन्नेव वर्षे 'सरस्वती–भवन–ग्रन्थमाला' इति संस्कृतपत्रिका प्रकाशिता।

1924तमे वर्षे संस्कृत–मासिक–पत्रिकात्रयं प्राकाश्यमागतम्। प्रथमा 'गीर्वाण' नाम्नी मद्रासतः, द्वितीया मैसूरुतः शष्ङ्गेरीमठस्य 'शारदा', तृतीया च काश्याः गोपालमन्दिरतः 'समस्याकुसुमाकरः' इति।

1925तमे वर्षे श्रीमन्महाराज–संस्कृत–पाठशालायाः पत्रिका मैसूरुतः प्रकाशिता, यस्यां संस्कृत–भाषायाः आधुनिकरचनाः प्रामुख्येण प्रकाश्यन्ते स्म।

1926तमे वर्षे तिरुपतितः डी.टी.ताताचार्यस्य सम्पादकत्वे 'उद्यानम्' इति मासिकी संस्कृतपत्रिका, काश्याः मीरघाटात् 'सुरभारती' इति संस्कृतमासिकी, कालीपदकाचार्यस्य भुवनमोहन–सांख्यतीर्थस्य च सम्पादकत्वे कोलकोतातः 'संस्कृतपद्यगोष्ठी' इति त्रिमासिकी संस्कृतपत्रिका प्राकाश्यमागताः।

1927तमे वर्षे काशीतः 'ब्राह्मण–महासम्मेलनम्' इति संस्कृतमासिक्याः प्रकाशनं जातम्।

1929तमे वर्षे संस्कृतस्य विद्वान् पत्रकारः रामावतारशर्मा प्राणान् अत्यजत्। अस्मिन्नेव वर्षे अमृतसरतः सीताराम–शास्त्रिणः सम्पादकत्वे 'अमरभारती' इति संस्कृतपत्रिकायाः प्रकाशनम् आरब्धम्।

1931तमे वर्षे भारतीय–वार्तापत्राधिनियमः प्रवर्तितः। अधिनियमोऽयं राजनीतिक–कार्याणि सविनयमवज्ञान्दोलनं च दमयितुं क्रियान्वितः आसीत्। अस्मिन्नेव वर्षे गुजरात–राज्यात् हीरालालशास्त्रिपञ्चोलिनः हरीशशंकरशास्त्रिणश्च सम्पादकत्वे 'श्रीपीयूषः' इति संस्कृतमासिकी,

श्रीनगराच्च नित्यानन्दशास्त्रिणः सम्पादकत्वे कुलभूषणस्य च सहसम्पादकत्वे 'श्रीः' इति संस्कृतपत्रिका प्राकाश्यमागते।

1934तमे वर्षे कालिपदकाचार्यस्य सम्पादकत्वे गाङ्गेय–नरोत्तरशास्त्रि–रामकृष्णचक्रवर्तिनोः सहसम्पादकत्वे कोलकोतातः 'संस्कृतपद्यवाणी' इति संस्कृतमासिकी, हैद्राबादतः कालूरामव्यासद्वारा 'कौमुदी' इति संस्कृतमासिकी, बङ्गालस्य धुलजोड़ातः 'संस्कृतसाहित्यम्' इति संस्कृतपत्रिका, लाहौरतश्च 'उषा' इति संस्कृतपत्रिका प्राकाश्यमागताः।

1935तमे वर्षे बेलगामतः गलगलीशमाचार्यस्य सम्पादकत्वे 'मधुरवाणी' इति संस्कृतमासिकी, कोलकोतातश्च 'मञ्जूषा' इति संस्कृत–मासिकी, प्रकाशिते जाते।

1936तमे वर्षे हरिद्वारतः 'दिवाकरः' इति संस्कृतपत्रिका, पुणेतः 'मीमांसाप्रकाशः' इति संस्कृतपत्रिका, तन्जोरतः 'सरस्वतीमहल' इति संस्कृतपत्रिका च प्रकाशिताः। अस्मिन्नेव वर्षे आगरातः प्रकाश्यमानायां 'कालिन्दी' इति संस्कृतपत्रिकायां दीनानाथशास्त्रिणा लिखितो निबन्धः 'संस्कृतपत्राणां साधारणेतिहासः' इति मुद्रितो जातः।

1937तमे वर्षे मुम्बईतो भारतीयविद्याभवनात् 'भारतीविद्या' इति अनुसन्धानात्मकं त्रैमासिकं पत्रम्, कुम्भकोणम्–तः एस्.सुब्रह्मण्यम्–शास्त्रिणा 'ब्रह्मविद्या' इति मासिकपत्रिका, वाराणसीतः 'शारदा' इति संस्कृतपत्रिका च प्रकाशिता।

1939तमे वर्षे महादेवशास्त्रिणः प्रधानसम्पादकत्वे बलदेवप्रसादमिश्रस्य च सम्पादकत्वे 'ज्योतिष्मती' इति सचित्रं हास्यपरकं संस्कृतपत्रं प्रकाशितम्। अस्य पत्रस्य केचन अङ्काः अश्लीलात्मकाः आसन्। संस्कृतमासिक–पत्रेऽस्मिन् आङ्ग्लप्रशासनस्य त्रुटि–प्रकाशन–कारणात् प्रशासनेन एतत् प्रतिषिद्धमासीत्।

1940तमे वर्षे वाराणसीतः 'उच्छृङ्खलम्' इति पाक्षिकं संस्कृतपत्रं प्रकाशितम्। हास्यरस–प्रधानेऽस्मिन् पत्रे अश्लीलहास्य प्रकाशनं निषिद्धमासीत्। पत्रेऽस्मिन् हास्यजनकानि चित्राण्यपि प्रकाश्यन्ते स्म। अस्मिन्नेव वर्षे पटनातः 'संस्कृत–संजीवनम्' इति बिहारसंजीवनसमाजेन

संस्कृतपत्रिका प्रकाशिता।

1941तमे वर्षे 'अमृतवाणी' इति वार्षिकी पत्रिका एस्. एम्. रामकृष्णभट्टेन बैंगलूरूतः प्रकाशिता।

1942 तमे वर्षे 'सरस्वतीसुमनः' इति वाराणसीसंस्कृतविश्वविद्यालयात् संस्कृतपत्रिका प्रकाशिता।

1944तमे वर्षे काशीतः पण्डितकालिप्रसादशास्त्रिणः सम्पादकत्वे 'अमरभारती' इति पत्रिका प्रकाशिता, यस्याः मुख्योद्देश्यमासीत् राष्ट्रभाषारूपेण संस्कृतस्य प्रतिष्ठापनम्।

1947तमे वर्षे 'वार्तापत्र–अन्वीक्षणसमितेः' (Press Enquiry Committee) संरचना जाता। अस्यां समितौ आदिष्टमासीत् यत् संविधानसभायाः मौलिकाधिकारान् संलक्ष्य वार्तापत्राणां नियमावलिः समीक्षणीया।

---

# तृतीयोऽध्यायः

## स्वातन्त्र्योत्तरकालिकी संस्कृतपत्रकारिता

**प्रस्तावना**

संस्कृतपत्रकारितायाः समग्रं स्वरूपं बोधयितुम् अस्माभिः 'संस्कृत–पत्रकारितायाः उद्भवः विकासश्चे'ति द्वितीयेऽध्याये संस्कृतपत्रकारिता त्रिधा विभाजिता, सा च प्राक्–स्वातन्त्र्यकालिकी, स्वातन्त्र्योत्तरकालिकी आधुनिकी च।

प्रथमेऽध्याये अस्माभिः विस्तरेण पठितं यत् 1947 तमवर्षात् प्राक् अर्थात् स्वातन्त्र्यावाप्तेः प्राक् कानि कानि संस्कृतपत्राणि, काः काश्च साप्ताहिक–पाक्षिक–मासिक्यः संस्कृतपत्रिकाः प्राकाश्यमागताः।

साम्प्रतम्, वयं परिशीलयिष्यामः यत् 1947 वर्षतः 1970 मितं वर्षं यावत् यत् किमपि संस्कृतपत्रपत्रिकाजातं प्रकाशितम्, तत्सर्वं स्वातन्त्र्योत्तरकालिक–संस्कृत–पत्रकारितारूपेण विभावनीयम्, ततः परम्, साम्प्रतं यावच्च (1970 तः 2010 वर्षं यावत्) आधुनिकी संस्कृतपत्रकारिता परिगणनीया।

संस्कृतपत्रकारिता इव आधुनिकसंस्कृतसाहित्यमपि विद्वद्भिः त्रिधा विभाजितम्। पं.बलदेवउपाध्यायः 'आधुनिक–संस्कृतसाहित्यस्येतिहासे' कालविभाजनमेनत् एवं करोति –

1. 1890 तः 1930 वर्षं यावत् अप्पाशास्त्रिराशिवडेकर–युगम्
2. 1930 तः 1960 वर्षं यावत् वी.राघवन्–युगम्
3. 1960 तः 1980 वर्षं यावत् भट्ट–मथुरानाथशास्त्रि–युगम्

अत्रास्माभिः 1970 तः 2010 वर्षं यावत् आधुनिकसंस्कृतयुगम् इत्युक्त्वा स्वतन्त्ररूपेण कालखण्डोऽयम् अवबोद्धव्योऽस्ति।

भवतु, इतः परम्, वयं 1947 तः 1970 वर्षं यावत् अर्थात् स्वातन्त्र्योत्तरकाले भारते त्रयोविंशतिवर्षाणि यावत् संस्कृतपत्रकारिताक्षेत्रे कियान् विकासो जातः इति समीक्षामहे।

## स्वातन्त्र्योत्तरकालिकी संस्कृत–पत्रकारिता

अस्माभिः 1947तमे वर्षे आङ्ग्ल–शासनस्य दासत्वम् अपाकृत्य बहुमूल्या स्वाधीनता अधिगता। प्राक्–स्वातन्त्र्यकाले प्रकाशितासु विभिन्नासु साप्ताहिक–पाक्षिक–मासिकपत्रिकासु एकतः दुर्लभानाम् अप्रकाशितानां च ग्रन्थानां प्रकाशनं क्रियते स्म, अपरत्र च, संस्कृत–कवि–लेखक–पत्रकाराणां राष्ट्रभक्ति–समन्विताः कथाः कविताः निबन्धाश्च प्रकाश्यन्ते स्म ।इतः परं वयमवलोकयिष्यामः यत् अस्मिन्नवधौ काः काः साप्ताहिक–पाक्षिक–मासिक्यः पत्रपत्रिकाः प्रकाशिताः जाताः ।

## स्वातन्त्र्योत्तर–कालिक्यः साप्ताहिक्यः संस्कृत–पत्रिकाः

ईस्वीये 1947तमे वर्षे सर्वप्रथमं स्वतन्त्रभारतस्य प्रथमं संस्कृतसाप्ताहिकपत्रं 'सुरभारती'–इति मुम्बईतः प्रकाशितम् । श्रीगोविन्दवल्लभशास्त्रिणः सम्पादकत्वे प्रकाश्यमानस्य अस्य पत्रस्य विषये 'मालवमयूरः' इति पत्रिकायां प्रकाशितमासीत् यत् – ''विश्वस्मिन् विश्वभारते भारत–भारती–भारतीयता–गौरव–विवर्द्धिषया प्रसरन्ती संस्कृतपत्र–दौर्लभ्यमपाकुर्वती विद्वज्जन–मण्डलसहयोगमुपनयन्ती मुम्बईतः 'सुरभारती'यं पत्रिका प्रचरति। इयं पत्रिका विद्वद्वर–वृन्दलब्ध–सहायास्ति।''

1951तमे वर्षे नागपुरस्य संस्कृतभाषा–प्रचारिणीसभया 'संस्कृत–भवितव्यम्' इति साप्ताहिकस्य संस्कृतपत्रस्य प्रकाशनमारब्धम्। श्रीधरभास्करवर्णेकरस्य सम्पादकत्वे आरब्धमिदं 'संस्कृतभवितव्यम्' अनन्तरं दि.वी.वराडपाण्डे, डॉ.नी.र.वर्हपाण्डे इत्येताभ्यामपि सम्पादितम्। अस्य प्रकाशनं सततं जायते। अनेके विशेषाङ्काः अस्य पत्रस्य विस्तारवैभवं गाम्भीर्यं च प्रदर्शयन्ति। अस्य भाषा सरला सन्धिरहिता चास्ति। डॉ.वी.राघवन् लिखति यत् ''संस्कृतभवितव्ये प्रकाशिता सामग्री, पत्रस्य शैली चानुपमा वर्तते।''

1953तमे वर्षे गलगलीशमाचार्यस्य संचालकत्वे पण्ढरी–नाथाचार्यस्य च सम्पादकत्वे बागलकोटतः ''वैजयन्ती'' इति साप्ताहिकपत्रं प्रकाशितम्। प्रतिमङ्गलवासरमिदं प्रकाश्यते स्म। पत्रमिदं त्रुटिरहितं सरल–

संस्कृत–संवलितं बालोद्यान–इति–स्तम्भयुतञ्चासीत्। अत्र विमर्शवेदिका–स्तम्भे अर्वाचीन–पुस्तकानां समीक्षा प्रकाश्यते स्म। अनन्तरं,

मुद्रणालयाभावात् धनाभावाच्च अस्याः साप्ताहिक–पत्रिकायाः नियतप्रकाशनं बाधितम्।

1953तमे वर्षे पण्डितरामयशत्रिपाठिनः संरक्षकत्वे वाराणसीतः अखिलभारतीय–पण्डितमहापरिषदा साप्ताहिकी 'पण्डितपत्रिका' प्रकाशिता। प्रतिसोमवासरं प्रकाश्यमानायाः अस्याः पत्रिकायाः मुख्यलक्ष्यं धर्मप्रचारः एवासीत्। 1960 तम–वर्षानन्तरं, धनाभावात् अस्याः पत्रिकायाः प्रकाशनं नैव जातम्।

1955तमे वर्षे जुलाई–मासतो गुण्टूरतः प्रतिसोमवासरं 'भाषा' इति साप्ताहिकी संस्कृतपत्रिका आरब्धा। अस्याः गौरवसम्पादकः श्रीकाशीकृष्णाचार्यः, सम्पादकश्च कृष्णसोमयात्री चास्ताम्। अस्याः पत्रिकायाः भाषा सरलासीत्। अत्र वार्ताः अपि प्रकाश्यन्ते स्म।

1964 तमे वर्षे श्रीरामबालकशास्त्रिणः सम्पादकत्वे 'गाण्डीवम्' इति साप्ताहिकं पत्रं काशीतः प्रकाशितम्। रामबालकशास्त्रिवर्यः जीवनपर्यन्तं सर्वमपि पणीकृत्य 'गाण्डीवम्'–प्रकाशने तत्परो बद्धपरिकरश्चावर्तत।

अस्य ग्रन्थस्य लेखकेन स्वीयाध्ययनावसरे काश्यां स्वीयनेत्राभ्यां दृश्टं यत् शास्त्रिवर्यः 'गाण्डीवम्'–पत्रिकायाः सातत्यार्थं कियता महता श्रमेण त्यागेन समर्पणेन निष्ठया च प्रयतते स्म। तस्य निधनानन्तरं, किञ्चित्कालं यावत् पत्रिकायाः प्रकाशनम् अवरुद्धं, पुनश्च श्रीगोपालशास्त्रिणः सम्पादकत्वे सम्पूर्णानन्द–संस्कृत–विश्वविद्यालय–परिसरतः निरन्तरमियं प्रकाश्यते। साम्प्रतमस्याः सम्पादकोऽस्ति डॉ.हरिप्रसाद–अधिकारी।

'गाण्डीवम्' इति साप्ताहिकं संस्कृतपत्रं स्वीयेन नैरन्तर्य–वैशिष्ट्येन रुचिकरेण विषयवैभवेन निष्पक्षतया च भावप्रकाशनेन संस्कृत–पत्रकारिता–क्षेत्रे विशिष्टं महत्त्वमादधाति। श्रीधर्मदत्तचतुर्वेदिना लिखितं यथा–

वृत्तं संस्कृत–माध्यमेन सकलं सम्प्रेष्यते भारते, वार्ता सर्वसमाज–योग्यगुणिनां येनात्र संगृह्यते।जात्यां वर्गजनेषु भावसमता धर्मेषु च स्थाप्यते, 'गाण्डीवम्' सुधियः पठन्ति किल तत् साप्ताहिकं पत्रकम्।।

**स्वातन्त्र्योत्तरकालिक्यः पाक्षिक्यः संस्कृतपत्रिकाः**

स्वतन्त्रभारते सर्वप्रथमं पाक्षिकं पत्रं पुणेतः 'भारतवाणी' इति प्रकाशितम्। डॉ.गजाननबालकृष्णपलसुले–अनन्तगाड्गिलश्चास्य सम्पादकौ आस्ताम्। सचित्रेऽस्मिन् पत्रे निबन्ध–कथा–कविताः अनूदितसाहित्यं च वार्ताभिः सहैव प्रकाश्यन्ते स्म।

भारतवाण्यां प्रकाशिताः केचन विशेषाङ्काः उत्कृष्टाः वर्तन्ते। 'का वार्ता विश्वमण्डले' इति शीर्षके विश्ववार्ताः प्रकाश्यन्ते स्म।

1958तमे वर्षे राजमुन्द्रीतः 'संस्कृतवाणी' इति पाक्षिकं पत्रं एन्.सी. जगन्नाथ–महोदयायाः सम्पादकत्वे प्रकाशितमासीत्। 1958 वर्षे पुणेतः श्रीवसन्तगाड्गिलस्य सम्पादकत्वे पाक्षिकं 'शारदा' इति संस्कृतपत्रमारब्धम्। अस्यां पत्रिकायां बाललेखाः प्रकाश्यन्ते। पत्रिकायाः भाषा सरला सरसा उपदेशात्मिका चास्ति। यथात्र द्रष्टव्यम्–

''प्रसारय संस्कृतध्वजम्। प्रताडय संस्कृतदुन्दुभिम्। प्रपूरय संस्कृतशङ्खम्। पठ संस्कृतम्। वद संस्कृतम्। लिख संस्कृतम्।''

अस्यां पत्रिकायाम् आकाशवाणी–वार्ता–नाटक–चित्रोत्सवानां विवरणानि जीवनचरितानि संस्कृत–विश्ववार्ताः समीक्षाश्च प्रकाश्यन्ते। बैंगलूरु–नगरे दशम–संस्कृतविश्वसम्मेलनावसरे शारदा–सम्पादकः गाड्गिलवर्यः विश्वसम्मेलनस्य विस्तृताः वार्ताः प्रकाश्य तत्रैव वितरितवान्। पाक्षिक–पत्रिकासु शारदा सर्वप्रिया महत्त्वपूर्णा चास्ति। अस्याः प्रकाशनम् 'ई–शारदा' इति वैद्युदाणविक–माध्यमेन [Electronic Medium] अपि विधीयते येन जनाः कम्प्यूटर्–प्रविधौ अन्तर्जालद्वारा अशेष–जगति एनां पठितुं द्रष्टुं चार्हन्ति।

**स्वातन्त्र्योत्तर–कालिक्यो मासिक्यः संस्कृत–पत्रिकाः**

1947 तमे वर्षे काञ्ची–कामकोटिपीठस्य मुखपत्रिकारूपेण 'ब्रह्मविद्या' इति स्वतन्त्र–भारतस्य प्रथमा संस्कृत–मासिक–पत्रिका कुम्भकोणम्–तः प्रकाशिता। पण्डितराजः एस्.सुब्रह्मण्यम्शास्त्री अस्याः सम्पादकः, टी. आर्.सुवासाचार्यश्च प्रकाशकः आस्ताम्। दर्शन–प्रधानपत्रिकैषा साम्प्रतं नैव प्रकाश्यते।

1948 तमे वर्षे वाराणसीतः 'वेदवाणी' इति संस्कृत–मासिकपत्रिका प्रकाशिता।

1948 तमे वर्षे कविराजस्य रामस्वरूपशास्त्रिणः सम्पादकत्वे मुम्बईतः 'बालसंस्कृतम्' इति मासिकी संस्कृतपत्रिका प्रकाशिता। पत्रिकायां विशेषेण बालोपयोगि–साहित्यं प्रकाश्यते स्म। पत्रस्योद्देश्यमासीत्–

"पुरे पुरे गृहे गृहे कुट्यां बाले युवस्वपि।
संस्कृतस्य प्रचाराय प्रभूयाद् बालसंस्कृतम्।।"

1950 तमे वर्षे अखिल–भारतीय–संस्कृतप्रचारक–संस्थायाः दिल्ल्याः शिक्षासमितेश्च मुखपत्रिकारूपेण 'संस्कृत–प्रचारकम्' इति संस्कृतमासिकस्य प्रकाशनं दिल्लीतः आरब्धम्। जीवितासु प्राचीनासु च संस्कृतमासिक–पत्रिकासु एषा अन्यतमा, तथापि अस्याः प्रकाशने नैरन्तर्यं नैवास्ति।

1950 तमे वर्षे जयपुरतः 'भारती' इति संस्कृतस्य मासिक–पत्रिका आरब्धा, सा च साम्प्रतमपि ( 2010तमे वर्षे ) सततं प्रकाश्यते।

आरम्भे, बाबासाहेबआप्टे–महोदयस्य सम्पादकत्वे गिरिराजशास्त्रि–

महोदयस्य च प्रबन्ध–सम्पादकत्वे प्रकाशितैषा सम्प्रति विदुषा पत्रकारेण श्रीकलानाथशास्त्रिणा सम्पाद्यते। 'भारती' संस्कृत–मासिक–पत्रिकासु स्वीयं विशिष्टं स्थानं बिभर्ति।

1050 तमे वर्षे काञ्चीतः 'वैदिकमनोहरा' इति संस्कृत–मासिकपत्रिका प्रकाशिता। श्री अण्णङ्काचार्यः अस्याः सम्पादकः, प्रामुख्येणात्र रामानुजीय–दर्शनसम्बद्धाः लेखाः प्राप्यन्ते।

1951 मिते वर्षे वाराणस्याः अपारनाथमठतः 'संस्कृतप्रतिभा' इत्याख्यायाः संस्कृतमासिकपत्रिकायाः प्रकाशनं पण्डित–रामगोविन्दशुक्लस्य सम्पादकत्वे जातम्। पत्रिकैषा सार्द्धैकवर्षं यावत् प्रचलिता।

1953तमे वर्षे नेपालस्य काठमाण्डु–नगरात् 'संस्कृतसन्देशः' इति इतिहास–वृत्तप्रधाना संस्कृतमासिक–पत्रिका प्रकाशिता। अस्यां शिलालेखानां प्रकाशनं जायते स्म।

1956 वर्षतः शिमलातः 'दिव्यज्योतिः' इति मासिकपत्रिका आचार्य–

दिवाकरदत्तशर्मणः तदनु च आचार्य-केशवशर्मणः सम्पादकत्वे प्राकाश्यमागता। अत्र प्रकाशिताः लेखाः वार्ताः श्लोकाश्च सर्वथा पठनीयाः अनुभूताः। प्रतिमासं पञ्चदश-दिनाङ्के प्रकाश्यमानायाः अस्याः केचन विशेषाङ्काः अपि प्रकाशिताः।

1956तमे वर्षे बेलगांवतः पण्डित-वरखेडीनरसिंहाचार्यस्य तदनु च पण्डित-शिरोमणेः गलगलीशमाचार्यस्य सम्पादकत्वे 'विद्या' इति संस्कृत-मासिकपत्रिकायाः प्रकाशनम् आरब्धम्। वर्षत्रयं यावत् प्रकाशितायाम् अस्यां प्रामुख्येण धार्मिकाः दार्शनिकाश्च निबन्धाः प्रकाशिताः।

1958मिते वर्षे श्रीरामरञ्जनस्य प्रकाशकत्वे 'प्रणव-पारिजातम्' इति मासिकी संस्कृतपत्रिका कोलकोताः आरब्धा। पत्रिकायामस्यां श्रीमद्भगवद्गीतायाः, गद्य-पद्यात्मकानां काव्यानाम्, अनुवादात्मकलेखानां च प्रकाशनं जायते स्म। अस्याम् अभिनवसाहित्यमपि प्रकाश्यते स्म।

1956 वर्षे 'संस्कृतसाकेतः' इत्यस्य वर्षाङ्कः डिसेम्बरमासे प्रकाशितः, तस्मिन् 'दिव्यवाणी' इति पत्रिकायाः वृत्तम् अधिगम्यते।

1959 तमे वर्षे वाराणसीतः 'अमरवाणी'ति संस्कृत-मासिक-पत्रिका प्रकाशिता। अमुना नाम्ना (अमरवाणी) एव अपरैका पत्रिकापि कुतश्चित् प्रकाशिता इति सूचनाधिगतास्ति।

1960 तमे वर्षे उडुपीतः श्रीके.वेंकटेशस्य सम्पादकत्वे 'गीता' इत्याख्या पत्रिका आरब्धा। अस्याः संस्कृतमासिकपत्रिकायाः प्रकाशनं कन्नड्लिप्यां भवति स्म।

1960तमे वर्षे वडोदरा-स्थितायाः विद्वत्सभायाः मुखपत्ररूपेण 'सरस्वती-सौरभम्' इति संस्कृतमासिक-पत्रिका श्रीजयनारायण-रामकृष्णपाठकस्य मुख्यसम्पादकत्वे आरब्धा। पत्रिकायामस्यां विद्वत्सभायाः विवरणानि नानारचनाश्च प्रकाश्यन्ते स्म।

1960तमे वर्षे गुरुकुलकांगडी-हरिद्वारतः 'गुरुकुल-पत्रिका' इति संस्कृत-मासिकपत्रिका आरब्धा या हि 1948वर्षतो हिन्दीभाषायां प्रकाश्यते स्म। साम्प्रतमस्याः सम्पादकोऽस्ति प्रो.महावीरप्रसाद अग्रवालः।

अस्यां श्रीसत्यव्रत-विद्यामार्तण्डस्य व्यवस्थापकत्वे धर्मदेवी-

विद्यामार्तण्डस्य च सम्पादकत्वे दार्शनिकाः ऐतिहासिकाः वैज्ञानिकाः सामाजिकाश्च निबन्धाः प्रकाश्यन्ते स्म, ये हि गम्भीराः रोचकाश्च इति पाठकाः स्वीकुर्वन्ति।

1960 तमे वर्षे नेपालस्य काठमाण्डुतः 'जयतु संस्कृतम्' इति मासिकपत्रिका संस्कृत–प्रचारार्थं प्रकाशिता। अस्यां कविताः निबन्धाः कथाः अनुवादसाहित्यं नेपालीय–विदुषां परिचय–विवरणानि च प्रकाश्यन्ते स्म।

1960 तमे वर्षे दिल्लीराज्यस्य संस्कृतविश्वपरिषदा यशोदानन्द–भारद्वाजस्य सम्पादकत्वे 'साहित्यवाटिका' इति पत्रिका प्रकाशिता। समस्यापूर्त्यादयोऽत्र प्रामुख्येण प्रकाशिताः।

1960तमे वर्षे बिहार–राज्यस्य मुंगेर–स्थलात् 'देववाणी' इति पत्रिका प्रकाश्यमागता।

1962तमे वर्षे आन्ध्रप्रदेशस्य चित्तूर–स्थलात् 'गैर्वाणी' इति संस्कृत–भाषाप्रचारिणी–सभया, संस्कृतमासिकपत्रिका प्रकाशिता। पूर्वमेषा पत्रिका त्रैमासिकी आसीत् अनन्तरमेषा डॉ.क.वे.रामकृष्णाचार्यस्य सम्पादकत्वे मासिकी विहिता। अस्यां सरलया सरसया च भाषया सभाविवरणानि वार्ताः लेखाः सुभाषितानि च प्रकाश्यन्ते। अस्यां तेलुगु–भाषायामपि वार्ताः सूचनाः लेखाश्च प्रकाशिताः भवन्ति।

1964 तमे वर्षे जयपुरतः श्रीगोविन्दप्रसाददाधीचस्य सम्पादकत्वे 'कल्याणी'–नाम्नी मासिक–पत्रिका आरब्धा। वर्षत्रयं यावत् प्रकाशितायामस्यां पत्रिकायां लेखाः कविता–नाटक–बालकथाः हास्यपद्यानि, अपि च, महिला–आयुर्वेद–व्याकरण–स्तम्भेषु निबन्धाः प्रकाश्यन्ते स्म। अत्र सम्पादकीयं सामयिकं स्वभावाभिव्यक्तिरूपं भवति स्म।

1970 तमे वर्षे राजस्थान–साहित्य–अकादम्या उदयपुरतः 'मधुमती' इति मासिकपत्रिका संस्कृतस्य सर्जनात्मक–लेखानां प्रोत्साहनार्थं प्रकाशिता। श्रीगणेशरामशर्मणः सम्पादकत्वे अस्याः पत्रिकायाः एकैवाङ्कः प्रकाशितः।

स्वतन्त्रभारते अनेकाः मासिक्यः पत्रिकाः प्रकाशिताः तासु काश्चन अस्तङ्गताः काश्चन नूतनाः आविर्भूताः। साम्प्रतं प्रायेण विंशतिः संस्कृत–मासिकपत्रिकाः प्रकाश्यन्ते।

**स्वातन्त्र्योत्तर–कालिक्यो द्वैमासिक्यः, त्रैमासिक्यः, चातुर्मासिक्यः, शाण्मासिक्यो, वार्षिक्यो द्विवार्षिक्यश्च संस्कृत–पत्रिकाः**

**द्वैमासिक्यः**

1946 तम–वर्षतो मध्यप्रदेशस्य मन्दसौरतः प्रकाश्यमाना 'मालवमयूरः' पूर्वं मासिकी पत्रिका आसीत्, अनन्तरं द्वैमासिकत्वेन प्रकाशिता। अस्याः सम्पादकत्वं श्रीरुद्रदेवत्रिपाठिना निरुह्यते स्म।

1950 तमे वर्षे फतेहगढस्य मकरन्दनगरतः 'भारतीविद्या' इति द्वैमासिक्याः संस्कृतपत्रिकायाः प्रकाशनं स्वामिनः चिन्मयानन्दस्य सम्पादकत्वे आरब्धम्। 'भारतीविद्या' इति पत्रिकायाः प्रकाशनवृत्तं 'मधुरवाणी' इति पत्रिकायां लभ्यते।

**त्रैमासिक्यः संस्कृत–पत्रिकाः**

1951 तमे वर्षे मथुरायाः चातुर्वेद–संस्कृतविद्यालयेन स्वतन्त्र–भारतस्य प्रथमा त्रैमासिकी 'विद्यालय–पत्रिका' संस्कृत–भाषायाम् आरब्धा। पं. पुरुषोत्तमशर्मचतुर्वेदिनः सम्पादकत्वे प्रकाश्य– मानायाः अस्याः पत्रिकायाः प्रकाशनम् अनियत–कालिकमासीत्। अपि चास्यां विद्यालयस्य प्राध्यापकानां विद्यार्थिनां च रचनाः प्रकाश्यन्ते स्म।

1953 तमे वर्षे सी.के.रामन्नाम्बियारस्य सम्पादकत्वे त्रिपुन्नुरा–संस्कृतविद्यालयस्य समित्या 'श्रीरविवर्म–संस्कृतग्रन्थावली' इति त्रैमासिक–संस्कृतपत्रिका त्रिपुन्नुरातः आरब्धा। अस्यां पत्रिकायाम् अप्रकाशितानां ग्रन्थानां प्रकाशनम्, संस्कृत–भाषायाः तात्कालिक–स्वरूप–सम्बद्धानाञ्च लेखानां प्रकाशनं भवति स्म।

1960 मिते वर्षे आचार्य–द्विजेन्द्रनाथशास्त्रिणः सम्पादकत्वे मेरठतः 'संस्कृतप्रभा' इति भारतीप्रस्थानस्य त्रैमासिकी अनुसन्धान–पत्रिका आरब्धा, परञ्च पत्रिकायाः प्रकाशनं प्रथमवर्षे एव स्थगितम्।

1960 तमे वर्षे पूर्वराज्यपालस्य अनन्तशयनअयङ्गारस्य महता प्रयासेन 'पाटलश्रीः' इति त्रैमासिकी शोधपत्रिका पाटलिपुत्रतः आरब्धा।

1962 तमे वर्षे एम्.वरदराजन्पन्तुलस्य सम्पादकत्वे चित्तूरस्य

संस्कृत–भाषाप्रचारिणी–सभया 'गैर्वाणी' इति संस्कृतस्य त्रैमासिकी पत्रिका आरब्धा। अस्यां सभाविवरणानि, भाषणानि, आन्ध्र–संस्कृतपरीक्षासूचनाः भाषणानि च प्रकाश्यन्ते स्म। अनन्तरं क.वे.रामकृष्णमाचार्यस्य सम्पादकत्वे एषा प्रकाश्यते स्म।

1962 तमे वर्षे मध्यप्रदेशस्य सागरविश्वविद्यालयस्य सागरिका–समित्या 'सागरिका' इति त्रैमासिकी संस्कृतशोधपत्रिका आरब्धा। एषा प्रतिवर्षं जुलाई–ऑक्टोबर्–जान्युआरि–एप्रिल्–मासेषु प्रकाश्यते। साम्प्रतं यावत् प्रकाशितासु सर्वास्वपि शोधपत्रिकासु 'सागरिका' स्वीय–वैदुष्यपूर्णानां प्रौढानां तर्कसंगतानां च लेखानां संस्कृत–मनीषिणां जीवनचरितानां नूतनसाहित्यस्य च प्रकाशनार्थं सादरं स्मर्यते। अस्याः पत्रिकायाः आद्यः सम्पादकः श्रीरामजीउपाध्यायः, साम्प्रतिकश्च सम्पादकः आचार्यराधावल्लभत्रिपाठी भारतीयमनीषायाः अद्भुतौ विद्वांसौ वर्तेते। सागरिकायाः विशेषाङ्काः अतीव रोचकाः गवेषणात्मकाश्च भवन्ति। संस्कृतशोधच्छात्राणां कृते पत्रिकैषा सर्वथा पठनीया संग्रहणीया चास्ति।

1964 तम–वर्षतः 'संस्कृत–सम्मेलनम्' इति बिहारराज्य–संस्कृतसाहित्य–सम्मेलनस्य त्रैमासिकं मुखपत्रं प्रकाशितम्। पत्रमेतत् पटना–नगरस्य श्रीरामनिरञ्जनमुरारका–संस्कृत–महाविद्यालयात् प्रकाश्यते। पत्रेऽस्मिन् विविध–विषय–सम्बद्धाः लेखाः, शोधनिबन्धाः, कविताः संस्कृत–वार्ताश्च प्रकाश्यन्ते। अनन्तरम् अस्य सम्पादनं श्रीचन्द्रदीपशुक्लस्य सम्पादकत्वे विधीयते स्म। पत्रेऽस्मिन् अनेके विशेषाङ्काः अपि प्रकाशिताः।

1964 तमे वर्षे प्रयागस्थया संस्कृत–साहित्यपरिषदा 'संगमनी' इति त्रैमासिकी शोधपत्रिका प्रकाशिता। पत्रिकायामस्याम् अप्रकाशितानां पाण्डुलिपीनां गवेषणात्मकानां लेखानां च प्रकाशनं जायते। डॉ.प्रभात–शास्त्री 'संगमनी'–पत्रिकायाः प्रधानसम्पादकोऽवर्तत।

1964 तमे वर्षे भारतीयविद्याभवनस्य संरक्षणत्वे 'संविद्' इति त्रैमासिकी संस्कृतपत्रिका मुम्बईतः प्रकाशिता। सम्पादकः श्रीजयन्तकृष्णहरिकृष्णदवे सहसम्पादकौ च शंकरपुरोहित–सुरेशोपाध्यायौ अवर्त्तन्त। सुचित्रैः सुसज्जितायामस्यां पत्रिकायां सम्पादकीयम्, प्रार्थनाः, सुभाषितानि,

लघुरूपकाणि, संस्कृतवार्ताः, पाठकानां प्रतिक्रियाः लेखाश्च प्रकाश्यन्ते।

1966 तमे वर्षे डॉ.देवीप्रसादखरवण्डीकरस्य सम्पादकत्वे अहमदनगरतः 'गुञ्जारवः' इति संस्कृतस्य त्रैमासिकी पत्रिका प्रारब्धा। अहमदनगरस्थया सनातनधर्मसभया पत्रिकैषा पुरस्कृता। संस्कृत–संस्कृति–विषयमधिकृत्य अस्यां नूतनानि पद्यानि लेखाः वार्ताश्च प्रकाश्यन्ते। अस्याः विशेषाङ्केषु ज्ञानेश्वर–रामदास–रौप्यमहोत्सवीयाः प्रमुखाः वर्तन्ते।

1964 तमे वर्षे जबलपुरतः 'हितकारिणी', अमदाबादतः 'ऋतम्भरम्', गुजरातस्य पारडीतः 'अमृतलता', आगरातः 'संस्कृत–स्रोतस्विनी', भोपालतः 'मालविका', कोलकातातः 'सनातनधर्मशास्त्रम्', दरभंगातः कामेश्वरसिंहदरभंगा–संस्कृतविश्वविद्यालयस्य 'मनीषा' इति त्रैमासिकी पत्रिका, जयपुरतः उमेशशास्त्रिणः सम्पादकत्वे 'संस्कृतसुधा', राजस्थान–साहित्याकादम्या उदयपुरतः 'मधुमती', चेत्यादयः त्रैमासिक्यः संस्कृतपत्रिकाः प्रकाशिताः। एतासु श्रीगणेशरामशर्मणः सम्पादकत्वे 'मधुमत्याः' केवलम् एक एवाङ्कः प्रकाशितः। 'अमृतलता' इति पूर्वं मासिक–पत्रिकासीदिति केचन स्वीकुर्वन्ति। 'संस्कृतसुधा'याः प्रबन्धसम्पादकः श्रीयोधराजसारस्वतोऽवर्तत। वर्षत्रयेऽस्याः अष्टौ अङ्काः एव प्रकाशिताः।

1947 तः 1970 तम–वर्षं यावत् अधिगत–सूचनाधारेण न काचिदपि चातुर्मासिकी संस्कृत–पत्रिका प्रकाशिता। अतः साम्प्रतं शाण्मासिकानां पत्राणां विवरणं लिख्यते।

इदं विशेषेणावलोक्यते यत् याः काश्चन शाण्मासिक्यः संस्कृतपत्रिकाः प्रकाशिताः ताः सर्वाः स्वतन्त्रभारते एव आरब्धाः। तासु अन्यतमा 1959तमे वर्षे नवदिल्ल्याः साहित्याकादम्या 'संस्कृतप्रतिभा' इति शाण्मासिकी शोधपत्रिका प्रकाशिता। अस्याः पत्रिकायाः आद्यसम्पादकः डॉ.वी.राघवन् अवर्तत। विशुद्धसंस्कृतस्य अर्वाचीन–प्रकाशनेन संयुतायाः अस्याः पत्रिकायाः प्रथमभागे सम्पादकीयम्, द्वितीयभागे अर्वाचीन–खण्डकाव्यानि, तृतीयभागे गद्यप्रबन्धाः, चतुर्थभागे रूपकाणि पञ्चमे भागे चानुवादाः प्रकाश्यन्ते स्म। अन्तिमे पृष्ठे लेखकानां परिचयः अवाप्यते स्म। पत्रिकायाः सम्पादकाः मूर्धन्य–विद्वांसो भवन्ति स्म। प्राक्तनेषु अङ्केषु तदानीन्तनानां सम्पादकानां

मौलिकानुसन्धान–प्रतिभायुताः निबन्धाः प्रकाशिताः सन्ति। साम्प्रतमेषा पत्रिका अनियता संजातास्ति।

1967 तमे वर्षे आगरा–नगरस्य हरप्रसाददासजैन–महाविद्यालयस्य संस्कृत–प्राकृतविभागस्य तत्त्वावधाने बिहार–राज्यस्य आराप्रदेशात् 'मागधम्' इति नाम्नी शाण्मासिकी संस्कृतपत्रिका श्रीनेमिचन्द्रशास्त्रिणः सम्पादकत्वे प्रकाशिता। अस्याः प्रत्येकमङ्कः 'उदय'–नाम्ना सम्बोधितः। पत्रिकायामस्याम् अर्वाचीन–साहित्यकाराणां कवीनां च लेखाः पद्यानि च प्रकाशितानि। अस्याः प्रत्येकमङ्कः शोधप्रबन्धायते।

**वार्षिक्यः संस्कृत–पत्रिकाः**

भारतस्य विभिन्नानां विश्वविद्यालयानां संस्कृत–विभागानां पक्षतः प्रायेण वार्षिकी पत्रिकैका प्रकाश्यते स्मेति काचिदस्ति प्राक्तनी परम्परा। अद्यत्वे परम्परैषा न तथा जीवति, तथापि निश्चप्रचं श्वसिति इति तु स्वीकरणीयम्। प्राचीनासु वार्षिकपत्रिकासु–1958 तमे वर्षे 'तरङ्गिणी' इति उस्मानिया–विश्वविद्यालयस्य संस्कृत–विभागाध्यक्षस्य डॉ.आर्येन्द्रशर्मणः प्रधानसम्पादकत्वे हैद्राबादतः आरब्धा।

अस्यां संस्कृत–वार्षिकपत्रिकायाम् अत्रत्यानामेव छात्राणां प्राध्यापकानाञ्च लेखाः, रचनाश्च प्रकाश्यन्ते स्म।

1958 तमे वर्षे डॉ.वी.राघवन्–महोदयस्य सम्पादकत्वे 'संस्कृततरङ्गः' इति वार्षिकी संस्कृतपत्रिका प्रकाशिता। अस्यां राघवन्–महोदयस्य नाटकानि लेखाश्च अन्येषामपि विदुषां लेखाः प्रकाशिताः वर्तन्ते।

1959 तमे वर्षे लखनऊ–विश्वविद्यालयस्य ज्ञानवर्धिनीसभया डॉ. सत्यव्रतसिंहस्य सम्पादकत्वे 'ज्ञानवर्धिनी' इति वार्षिकी संस्कृतपत्रिका आरब्धा। अत्रापि विश्वविद्यालयीयच्छात्राणाम् एव रचनाः प्रकाशिताः सन्ति। अस्याः पत्रिकायाः एक एवाङ्कः प्राकाश्यमागतः।

1959 तमे वर्षे काशीहिन्दुविश्वविद्यालयीय–संस्कृत–महाविद्यालयस्य मुखपत्रिकारूपेण 'सुरभारती' इति हस्तलिखिता वार्षिकपत्रिका प्रकाशिता। प्राचार्य–विश्वनाथशास्त्रिणः सम्पादकत्वे प्रकाश्यमानायां 'सुरभारती'–

पत्रिकायां प्राचीन–भारतीय–विद्यासम्बद्धाः लघुनिबन्धाः प्राध्यापकानां च प्रौढलेखाः वर्तन्ते स्म। धनाभावात् सुरभारत्याः प्रकाशनं हस्तलिखितरूपेण जातम्, तत्रापि पञ्चप्रतयः एव प्रकाश्यन्ते स्म।

1962 तमे वर्षे रायपुरस्य राजकीय–दूधाधारि–संस्कृत–विद्यालयस्य वार्षिकपत्रिका 'मेधा' इति विद्यालयस्य प्राचार्यस्य सम्पादकत्वे आरब्धा। अस्यां विद्यालयस्य प्राध्यापकानां शोधनिबन्धाः प्रकाशिताः। अत्र प्रकाशितेषु केचन निबन्धाः अतितरां महत्त्वाधायिनः स्वीक्रियन्ते।

1962 तमे एव वर्षे वडोदरा–संस्कृत–महाविद्यालयस्य मुखपत्रिकारूपेण 'सुरभारती'ति वार्षिकी संस्कृतपत्रिका प्रकाशिता। पत्रिकायामस्यां महाविद्यालयीयच्छात्राणां प्राध्यापकानां च लेखाः प्राप्यन्ते।

'प्राची' इति वार्षिक–शोधपत्रिका वाराणस्याः संस्कृत–विश्वविद्यालयेन प्रकाशिता। छात्रसंघस्य अस्यां पत्रिकायां विश्वविद्यालयस्य शोधच्छात्राणां शोधलेखाः प्राध्यापकानां च गवेषणात्मकाः प्रौढाः लेखाः प्रकाश्यन्ते स्म।

———————————————

# चतुर्थोऽध्यायः

## आधुनिकी संस्कृत–पत्रकारिता

**प्रस्तावना**

पूर्वस्मिन् अध्याये संस्कृत–पत्रकारितायाः समग्रं स्वरूपं समवगन्तुम् अस्माभिः संस्कृत–पत्रकारितायाः काल–विभाजनं त्रिधा कृतम्। भारतीय–पत्रकारितायाः उद्भवेन विकासेन च सार्धं पत्रकारितायाः आनुक्रमिकम् अधुनातन–स्वरूपं चापि सङ्क्षेपेण सङ्केतितम्।

आधुनिक–पत्रकारितायाः आरम्भः सप्तदश–शताब्दस्य अन्तिमचरणे अजायत इति तु सुस्पष्टम्। ततः परम्, अष्टादश–शताब्दस्य अन्तिमचरणे आरब्धा 'संस्कृत–पत्रकारिता' अनुक्रमं समेधिता। अत एव काल–विभाजनानुसारेण 1970तः 2010वर्षं यावत् परिगणिता आधुनिकी संस्कृत–पत्रकारिता गच्छता कालेन जवीयस्या गत्या समेधितास्ति।

विंशशताब्दस्य अन्तिम–चरणे संजातायाः सूचनाक्रान्तेः कारणात् साम्प्रतम् आधुनिक–पत्रकारितायाम् अनेकविधं परिवर्तनं दरीदृश्यते। एकस्यामेव कस्याञ्चित् भाषायां प्रकाश्यमानस्य दैनिकवार्तापत्रस्य साप्ताहिक्याः पाक्षिक्याः वा वार्तापत्रिकायाः पृथक्–पृथक् अङ्काः (संस्करणानि) विभिन्नान् विषयान् आधृत्य प्रकाश्यन्ते। एतेषु विषयेषु बालपत्रकारिता, क्रीडापत्रकारिता, वाणिज्यपत्रकारिता इत्यादयो विभिन्नाः विषयाः आधुनिक–पत्रकारितायाम् अन्तर्भाविताः संजाताः।

आधुनिक–संस्कृत–पत्रकारितायाः स्थितिरपि प्रतिशतं शतमिता नैतादृशी, परञ्च न्यूनाधिकरूपेण एनमेव मार्गमनुसरतीति तु निश्चप्रचम्।

एतदतिरिच्य, दृश्यपत्रकारिता–श्रव्यपत्रकारितयोः रेडियो–टीवीति प्रबलतरस्य प्राविधिक–माध्यम–द्वयस्य महती भूमिकापि आधुनिके युगे नोपेक्षितुं शक्यते।

एवं हि, सूचना–प्रविध्योः क्रान्तेः परिणामत्वेन कम्प्यूटरीकृते विश्वव्यापिनि अन्तर्जाले स्थापिताः नाना ई–पत्र–पत्रिकाश्चापि आधुनिक–पत्रकारितायाः

अङ्गीभूताः सन्ति। 'वेब्साइट्स्–इति वैद्युदाणविक–प्रणालीः आधष्त्य भिन्नाः विभिन्नाः च पत्रपत्रिकाः विश्वजनीन–स्वरूपतां भजन्ते। 'Portal' इति अन्तर्जालिक–पत्र–माध्यमेन कस्याञ्चिदपि भाषायां विश्वस्य कस्मिन्नपि भागे स्थितो जनः कस्मिंश्चिदपि कालखण्डे (Time) अन्तर्जाल–(Internet)–माध्यमेन तद् द्रष्टुं तच्च पठितुं तच्च श्रोतुमर्हति। एतदस्ति वैचित्र्यम् अप्रतिमञ्च स्वरूपम् आधुनिक–पत्रकारितायाः।

संस्कृतस्य आधुनिक–पत्रकारितापि न्यूनाधिकरूपेण एतादृशमेव स्वरूपं संधत्ते। संस्कृतभाषायां दैनिकं वार्तापत्रं 'सुधर्मा' इति विगतेभ्यः एकचत्वारिंशद्वर्षेभ्योऽनारतं प्रकाश्यते। विगतेभ्यः शट्त्रिंशद्वर्षेभ्यः प्रतिदिनं वारद्वयम् आकाशवाणीतः संस्कृतवार्ताः नैरन्तर्येण प्रसार्यन्ते। विगतेभ्यः शोडशवर्षेभ्यः टीवी–माध्यमेन दूरदर्शनात् प्रतिदिनं प्रातः संस्कृतवार्ताः प्रसारिताः भवन्ति।

अन्तर्जाले चानेकाः संस्कृत–सम्बद्धाः 'वेब्साइट्स्'–इति वैद्युदाणविक–प्रणाल्यो वर्तन्ते, याः नाम संस्कृतस्य समुपयोगित्वं व्यवहार्यत्वं च ख्यापयन्ति।

1866 ईस्वीय–वर्षादारब्धा संस्कृत–पत्रकारितायाः यात्रा अनेकविधाः बाधाश्चापि अन्वभवत्। अनेकत्र कण्टकाकीर्णे मार्गे संस्कृत–पत्रकारितायाः विकास–यात्रैषा कदाचित् मन्दतामुपगता, कदाचिच्च अवरुद्धगतिका जाता, परं च सौभाग्यस्यायं विषयो यत् सतीष्वपि अनेकासु बाधासु यात्रैषा निरन्तरं अग्रेसृता।

संस्कृत–पत्रकारितायाः आधुनिकोऽयम् आयामो विशालो व्यापकश्च। संस्कृत–पत्रकारितायाः यात्रायाः क्रमानुशीलनेन स्पष्टं प्रतीयते यत् देशस्य विभिन्नेषु भागेषु चिरात् प्रारब्धा संस्कृत–पत्र–पत्रिकाणां यात्रैषा क्रमशोऽभ्युदयपथि प्राचलत्।

संस्कृतभाषायाः सम्पर्केण सर्वाः अपि भारतीयाः प्रदेशभाषाः उत्तरोत्तरमवर्धन्त। राष्ट्रभाषायाः हिन्द्यास्तु स्वरूपमेव संस्कृत–साहाय्येन सुपुष्टं समृद्धञ्च वर्तते। इदमेव कारणं यत् प्रायशो द्विभाषिक–पत्रिकासु त्रिभाषिक–पत्रिकासु च संस्कृतरचनाः अवश्यमेव प्रकाशन्ते।

## आधुनिक–संस्कृत–पत्रकारितायाः स्वरूपम्

संस्कृत–पत्रकारितायाः स्वरूपम् अस्माकं सामाजिक–जीवनशैल्याः अनुसारेण अनेकधा परिवर्तितम्। यद्यपि इतर–भाषापेक्षया संस्कृते दैनिक–पत्राणां साप्ताहिक–पाक्षिक–मासिक–पत्रिकाणां च संख्या न्यूनास्ति, तथापि एतत्तु सुस्पष्टं यत् अशेषभारतस्य सर्वाः अपि क्षेत्रीयाः भाषाः संस्कृतेन अतितरां पल्लविताः विकसिताश्च वर्तन्ते। अतः सम्पूर्णेऽपि भारते विभिन्नेषु नगरेषु शैक्षणिक–संस्थानेषु च यावत्यः संस्कृत–पत्र–पत्रिकाः प्रकाशन्ते, तासां सर्वासामपि संख्या आहत्य इतरभाषिक–पत्रपत्रिकाणां संख्यां नूनमतिशेते।

स्वतन्त्रता–प्राप्तेः पूर्वम्, अनन्तरम्, साम्प्रतं च संस्कृत–भाषिक्यः अनेकाः पत्रपत्रिकाः प्रकाशिताः, तासु काश्चन कतिपय–कालानन्तरम् अवरुद्धाः, काश्चन नूतनाः साम्प्रतमपि प्रकाश्यन्ते।

2010 तमे वर्षे जुलाई–मासे पञ्चविंशति–दिनाङ्के (2010–07–25) व्यास–पूर्णिमावसरे वडोदरातः 'संस्कृत–वर्तमानपत्रम्' इति संस्कृतदिनपत्रं सम्पादकेन प्रफुल्ल–पुरोहितेन आरब्धम्।

वयं शुभं कामयामहे यत् 'सुधर्मा' इव इदमपि दिनपत्रं दीर्घावधिं यावत् सुरभारत्याः सेवायाम् अव्याहतगतिकं स्यात्।

## साम्प्रतिकानि दैनिक–संस्कृत–वार्तापत्राणि

संस्कृत–भाषायां दैनिक–वार्तापत्रस्य प्रकाशनम् अतितरां दुष्करकार्यं वर्तते, तथापि अनेके संस्कृतसंस्कृति–प्रेमिणः संस्कृताभिमानिनः सुरभारत्याः सेवार्थं बद्धपरिकराः च संस्कृतानुरागिणः संस्कृतभाषायां दिनवार्तापत्रस्य प्रकाशनस्य दुःसाहसमाचरन्ति।

विजयः (संस्कृतिः) – 'विजयः' इति स्वतन्त्रभारतस्य प्रथमं संस्कृतदिनवार्तापत्रम् अवर्तत। तद्धि 1961 तमे वर्षे पुण्यपत्तनात् प्रकाशितम्। पञ्चदश–दिनानि यावदस्य नाम 'विजयः' आसीत्, अनन्तरमस्य नाम 'संस्कृतिः' इति परिवर्तितम्। पण्डित–बालाचार्यखरावेडकरः अस्य सम्पादकः आसीत्।

सुधर्मा–पण्डित–कळलनडादूरु–वरदराजय्यङ्गार्यस्य सम्पादकत्वे मैसूरुतः 1970 तम–वर्षात् भारतस्य द्वितीयस्य, स्वतन्त्र–भारतस्य तृतीयस्य, आधुनिकसंस्कृतपत्रकारितायां च प्रथमस्य संस्कृतदिनवार्तापत्रस्य प्रकाशनमारब्धम्। सत्स्वपि अनेकेषु व्यवधानेषु श्रीमता वरदराजय्यङ्गार्य–वर्येण न कदापि धैर्यं ध्वंसितम्, न च कदापि संस्कृतदिनवार्तापत्रप्रकाशने व्यत्ययो विहितः। आजीवनं तेन 'सुधर्मा'याः सातत्यार्थं महीयान् प्रयासोऽनुष्ठितः। श्रीमतो वरदराजय्यङ्गार्यस्य परलोकगमनानन्तरं तस्य आत्मजः के.वि.सम्पत्कुमारः 'सुधर्मा'याः सम्पादकत्वं निभालयति। सम्पत्कुमारस्य अर्धाङ्गिनी श्रीमती जयलक्ष्मी सर्वतोभावेन अस्य दिनवार्तापत्रस्य प्रकाशनार्थं साहाय्यं विदधाति। पितृपादस्य पारमार्थिकमिदं व्रतमिति विचार्य श्रीमान् सम्पत्कुमारः सुधर्मायाः सातत्यार्थं सर्वमपि पणीकृत्य सन्नद्धोऽस्ति। तस्यास्मिन् महति कर्मणि विद्वान् एच.वी.नागराजरावः, विद्वान् डॉ.टी.वी.सत्यनारायणः च 'सुधर्मा'याः गौरव–सम्पादकत्वेन अनारतं कर्मनिरतौ स्तः। संस्कृतस्य दैनिक–वार्तापत्रेषु 'सुधर्मा' परमां प्रतिष्ठां भजते। दिनपत्रेऽस्मिन् राष्ट्रियाः, अन्ताराष्ट्रियाः क्षेत्रीयाः च विभिन्नाः वार्ताः विदुषां साहित्यिकानां कविलेखकानां कथाः कविताः लेखाश्च प्रकाश्यन्ते।

नवप्रभातम्– 1991 तमे वर्षे कानपुरात् डॉ.शिवबालकद्विवेदी भारतस्य चतुर्थम्, आधुनिक–संस्कृतपत्रकारितायां च द्वितीयं 'नवप्रभातम्' इति संस्कृत–दिनवार्तापत्रम् आरभत। इतर–संस्कृत–पत्र–पत्रिकाः इव एतत् दिनपत्रमपि वित्त–ग्राहक–लेखकाभावात् अनियतं सत् यदा कदा प्रकाश्यते। यद्यपि अनेके संस्कृतानुरागिणः विद्वांसश्च अस्य प्रकाशनाय सहयोगं कृतवन्तः येन किञ्चित्कालं यावत् एतत् नियतं प्रकाश्यते स्म। एतद्विषये 'नवप्रभातम्'–सम्पादकः स्वयमेव लिखति यत्– "पत्रस्य समक्षं साधनानामभावो वर्तते। प्रायः एकाकी एव सम्पादनं व्यवस्थां च करोमि। सम्पादक–वर्गादारभ्य सेवक–प्रकल्प–पर्यन्तं सर्वं कार्यं प्रसन्नतया साध्नोमि। तत्रापि प्रसन्नतामेव सर्वदा अनुभवामि यत् संस्कृतमातरं संसेवे। मन्ये संस्कृतमाता सस्मितं सस्नेहं च कथयति– वत्स! करणीयमिदं राष्ट्रकार्यं कुरु! तया सम्प्रेरितः तां च संस्मरन् कार्यं करोमि।"

संस्कृतवर्तमानपत्रम्– मासेऽस्मिन् व्यासपूर्णिमावसरे अर्थात् 25.07. 2010 दिनतः वडोदरातः श्रीप्रफुल्लपुरोहितः संस्कृतवर्तमानपत्रम् आरभत।

संस्कृतानुरागी श्रीप्रफुल्लपुरोहितः विगतवर्षचतुष्टयात् 'देवसायुज्यम्' इति संस्कृतमासिकपत्रिकां सम्पाद्य वडोदरातो नियतरूपेण प्रकाशयति। अतः स्वाभाविक्येषा अपेक्षास्ति यत् सत्स्वपि दुष्करकार्येषु दिनपत्र–प्रकाशनेऽसौ नूनं साफल्यमवाप्नुयात्। 'संस्कृतवर्तमानपत्रम्' इति दिनपत्रं चोत्तरोत्तरं वृद्धिं समृद्धिं व्यापृतिं च लभेताम्।

संस्कृतस्य आधुनिक–पत्रकारिताक्षेत्रस्य स्पर्धाङ्गणे केवलं दैनिक–संस्कृतवार्तापत्रत्रयमेव वर्तते। अपरत्र, संस्कृतस्य श्रव्य–दृश्य–पत्रकारिताक्षेत्रे तु प्रतिदिनं संस्कृतवार्तानां प्रसारणं भवत्येव आकाशवाणी–दूरदर्शनाभ्याम्। अत एवास्माभिः वक्तुं शक्ष्यते यत् संस्कृत–पत्रकारितायाः भविष्यत् उज्ज्वलं प्रशस्तं च वर्तते।

### आधुनिक–संस्कृतपत्रकारितायाः स्वरूप–सन्दर्भे

### साप्ताहिक्यः संस्कृतपत्रिकाः

स्वतन्त्र–भारते प्रकाशितेषु संस्कृत–साप्ताहिक–पत्रेषु 'गाण्डीवम्' स्वसमालोचनैः निर्भीक–पत्रप्रकाशनेन च संस्कृतजगति विशिष्टं किमपि स्थानं संधत्ते। आधुनिक–संस्कृतपत्रकारितायाः क्षेत्रे 'युगगतिः' इति साप्ताहिकं परिगण्यते यद्धि 'राजसाकेती'–इत्यस्य सम्पादकत्वे 1982 तमे वर्षे गोरखपुरतः प्रकाशितम्। साप्ताहिक–पत्रमिदं प्रतिसोमवासरं प्रकाश्यते, अस्मिन् च वार्ताभिः सार्धं सम्पादकीयम्, निबन्धाः, लघुकथाः, पद्यानि च प्रकाश्यन्ते। अनेन पत्रेण प्रकाशितेषु विशेषाङ्केषु 1998 तमे वर्षे प्रकाशितः राष्ट्रियैकता–विशेषाङ्कः अन्यतमोऽस्ति।

### पाक्षिक्यः संस्कृतपत्रिकाः

1988 तमे वर्षे डिसेम्बर–मासात् हरियाणा–राज्यस्य यमुना–नगरात् प्रो.सत्यदेववर्मणः सम्पादकत्वे 'हितसाधिका' नाम्नी पाक्षिकी पत्रिका आरब्धा। अस्याः उद्घोषोऽवर्तत यत् हिमाचल–हरियाणा–पंजाब–चण्डीगढ–देहली–प्रदेशानाम् इयम् एकमात्रं प्रतिनिधि–संस्कृत–वार्तापाक्षिकी वर्तते इति।

पत्रिकायाः उद्देश्य–विषये लिख्यते स्म प्रत्यङ्कम्–लेखे व्यवहारे च सरल–संस्कृत–प्रचालनात्, संस्कृतस्य पुनरपि लोकभाषात्वापादनम्।

सिञ्च सिञ्च क्षुपान् सिञ्च, संस्कृते हितसाधिने,
स्युः कालेन युवानस्ते सुपुष्पाः सुफलाः अपि।।

1990 तमवर्षतः 'गोरखपुरचर्चा'–नामकं पाक्षिकं संस्कृतपत्रं गीता–श्रीवास्तवमहाभागायाः सम्पादकत्वे आरब्धम्। गोरखपुरात् प्रकाश्यमानेऽस्मिन् अष्टपृष्ठात्मके पाक्षिकपत्रे विविधविषय–सम्बद्धाः लेखाः विस्तृत–वार्ताश्च प्रकाश्यन्ते स्म। अस्य पाक्षिक–वार्तापत्रस्य विशेषाङ्कोऽपि प्रकाशितः आसीत्।

1994 तमवर्षतो दिल्लीतः श्रीजीतरामभट्टस्य सम्पादकत्वे 'दिशाभारती' इति पाक्षिकं पत्रमारब्धम्। पत्रेऽस्मिन्, विविधविषयसम्बद्धाः वार्ताः विभिन्नानां संस्कृत–कार्यक्रमाणां विवरणानि, लेखाः कवितादयश्च प्रकाश्यन्ते स्म। वर्षपञ्चकं यावत् अस्य पाक्षिकस्य प्रवर्तनमजायत।

एवं हि अन्येषामपि संस्कृतपाक्षिकपत्राणां प्रकाशनं जातम्, परं च तेषां विस्तृतं विवरणमप्राप्यमेवास्ति। एतादृशेषु पाक्षिकपत्रेषु वाराणसीतः 'कृतान्तः', मुजफ्फरपुरतः 'मित्रम्', कोलकातातः 'भक्तिसुधा', तिरुपतितः 'भवन्स्‌जर्नल्', दिल्लीतः 'संस्कृतमञ्जूषा', श्रीरंगम्–तश्च 'संस्कृतश्रीः' अन्यतमानि सन्ति।

**संस्कृतस्य आधुनिक्यो मासिक–द्विमासिक–त्रिमासिक–चतुःमासिक–षण्मासिक–वार्षिक्यश्च पत्रिकाः**

1970 तमे वर्षे राजस्थानसाहित्याकादम्या उदयपुरतः 'मधुमती' इति मासिकपत्रिका श्रीगणेशरामशर्मणः सम्पादकत्वे प्रकाशिता। अस्याः पत्रिकायाः एकैवाङ्कः प्रकाशितः आसीत्। साम्प्रतं 'मधुमती'–पत्रिका हिन्दीभाषायाः पत्रिका संजातास्ति। पण्डितगणेशरामशर्मा 'मधुमत्याः' प्रकाशने सविशेषं प्रायतत। अनुभवसिद्धः सुयोग्यो लेखकः सम्पादनकुशलः श्रीगणेशरामशर्मा सर्वथा निःस्वार्थं संस्कृतपत्रिकामसेवत। श्रीगणेशरामशर्मणः परामर्शानुसारि 1975 तमे ईस्वीये वर्षे राजस्थान–साहित्याकादमी पृथक्‌रूपेण 'स्वरमंगला' इति त्रिमासिकीं पत्रिकां प्रारभत।

1976 तमे वर्षे श्रीवीरभद्रः सुश्री अनीता चेतौ स्वीय-सम्पादकत्वे लखनऊतः 'सर्वगन्धा'-इति प्रगतिशीलां संस्कृतमासिकपत्रिकां प्रकाशितवन्तौ। अस्यां पत्रिकायां लोकोन्मुखाः राष्ट्रानुरागजनकाः कर्तव्यप्रेरकाश्च लेखाः प्रकाश्यन्ते। दम्पती सम्पादकौ स्वगृहमेव संस्कृतमयं कृतवन्तौ। अनयोः बालकः बालिका चापि संस्कृतं सम्भाषेते।

1978 वर्षे प्रभाकररामरत्नशास्त्रिणा दिल्लीतः 'संस्कृतामृतम्' इति मासिकपत्रिका आरब्धा। पत्रिकैषा दिल्लीप्रदेशस्य उत्कृष्टा सर्वजनसुलभा च संजाता। संस्कृतभाषायाः संवर्धने क्षमायामस्यां पत्रिकायां सम्पूर्णेऽपि देशे जायमानानां संस्कृतकार्यक्रमाणां वार्ताः सरलसंस्कृतसम्वलिताश्च नाना लेखाः प्रकाश्यन्ते स्म।

1979 वर्षतो मुम्बईतः श्रीभि.वेलणकरस्य संस्थापकत्वे प्रधानसम्पादकत्वे च देववाणीमन्दिरस्य मुखपत्ररूपेण 'गीर्वाणसुधा' इति मासिकी पत्रिका प्रकाशिता। अनन्तरं डॉ.शां.ग.मोघे अस्य सम्पादनं व्यदधात्।

1980 तमे वर्षे आचार्यमधुसूदनशास्त्रिणः संस्थापकत्वे सम्पादकत्वे च 'श्रीपण्डितः' इति मासिक-पत्रिका काशीतः प्रकाशिता। श्रीचन्द्रोदयमिश्र-भालचन्द्रपाण्डेयौ, अनन्तरम् अस्य सम्पादनं व्यदधात्। अस्यां पत्रिकायां प्रायः गवेषणात्मकाः लेखाः, पद्यानि वार्ताश्च प्रकाशिताः भवन्ति। शोधच्छात्राणां कृते एषा पत्रिका सर्वथा पठनीया भवति। पत्रिकैषा यदा कदा संयुक्ताङ्करूपेणापि प्रकाश्यते।

1982 तमे वर्षे प्रधानसम्पादकः प्रबन्धसंचालकः च डॉ.प्रकाशमित्रशास्त्री कानपुरतः 'पारिजातम्' इति संस्कृतमासिकं प्रारभत। आचार्यसोमदत्तवाजपेयी डॉ.विद्याशंकरदीक्षितश्चास्य सम्पादकौ आस्ताम्। मासिक-पत्रिकासु एषा वैशिष्ट्यं संधत्ते। अस्याः सामयिक-चिन्तनम्, वेदवाणी, संस्तवः, साहित्यसरणिः, हास्यव्यङ्ग्यम्, सामान्यज्ञानम्, वातायनादि-स्तम्भेषु रुचिकराः, मनस्तोषकाः ज्ञानवर्धकाश्च लेखाः प्रकाश्यन्ते।

1983 वर्षतः 'चन्द्रमामा' इति संस्कृत-मासिकपत्रिका चेन्नईतः नागरेड्डि-महोदयस्य सम्पादकत्वे जायते स्म। चित्रकथायुतायामस्यां पत्रिकायां विविधविषयकाः बालमनोरञ्जिन्यः कथाः प्रकाश्यन्ते। अन्यासु

भाषास्वपि पत्रिकैषा अतीव लोकप्रिया सर्वजनग्राह्या चास्ति।

लोकसुश्रीः– 1987 वर्षतः श्रीसदानन्ददीक्षितस्य सम्पादकत्वे उडीसा–राज्यस्य पुरीतः लोकभाषा–प्रचारसमितेः मुखपत्रत्वेन एषा संस्कृतमासिकपत्रिका प्रकाश्यते। अस्यां पत्रिकायां सरल–संस्कृतभाषया निबद्धाः निबन्धाः, लेखाः, कविताः, कथाश्च प्रकाश्यन्ते, युगपदेव संस्कृतभाषायाः प्रचाराय प्रसाराय च कृतभूरिश्रमायाः लोकभाषाप्रचारसमितेः देशे विदेशेषु चायोजितानां संस्कृतकार्यक्रमाणां शिविर–वृत्तानां च विवरण–विस्तरमपि अत्र प्रकाश्यते।

सत्यानन्दम्– 1987 वर्षात् कोलकातातः श्रीमृगानन्दस्य डॉ. कुमारभट्टाचार्यस्य च सम्पादकत्वे 'सत्यानन्दम्'–इति मासिकी संस्कृतपत्रिका साधारणजनानां मध्ये सरल–संस्कृत–प्रसारमाध्यमेन संस्कृतं प्रति सुप्तानुरागस्य पुनर्जागरणार्थम् आरब्धा। सम्प्रति पत्रिकेयं हरिसत्यानन्द–चैरिटेबल्–न्यासस्य स्वामिहीरानन्दस्य संरक्षकत्वे प्रकाश्यते।

अभिनवसंस्कृतम्– 1992 वर्षतः कानपुरात् डॉ.शिवबालक–द्विवेदिनः संस्थापकत्वे निदेशकत्वे च 'अभिनवसंस्कृतम्' इति मासिक–पत्रिका "पुनरपि लसतु संस्कृतं गृहे गृहे"–इत्युद्घोषणा–पुरस्सरं प्रकाशिता। डॉ.सुमनमिश्रः श्रीमती पुष्पाजोशी चास्याः सम्पादिके स्तः। अस्यां शोधपूर्णाः लेखाः वार्ताश्च विस्तरेण प्रकाश्यन्ते। पत्रिकायां चत्वारो विशेषाङ्काः अपि प्राकाश्यमानीताः।

सम्भाषणसन्देशः– 1994 वर्षतः बैंगलूरुतः प्रकाश्यमाना 'सम्भाषण–सन्देशः' इति संस्कृतस्य मासिकी पत्रिका साम्प्रतं यावत् प्रकाश्यमानासु सर्वासु संस्कृत–मासिकपत्रिकासु विशिष्टं स्थानं लभते। सरल–संस्कृतभाषया आकर्षक–सज्जया विविधवर्ण–वर्णितया च पत्रिकैषा अधुनातन–प्रविधिद्वारा प्रकाश्यते इति कृत्वा नूनमियं पाठकानां संस्कृतानुरागिणां चेतांसि आवर्जयति। श्रीजनार्दनहेगडे अस्य पत्रस्य सम्पादकः अस्ति। संस्कृतस्य प्रचारार्थं हितसाधनार्थं चात्र विशिष्टाः लेखाः प्रकाश्यन्ते, युगपदेव संस्कृतं प्रति जनानामभिरुचिं विवर्धयितुं, बालानां च संस्कृतानुरागिणां संस्कृतप्रवृत्तिं प्रोत्साहयितुम् अस्यां कथा–आख्यायिका–व्यङ्ग्यलेख–प्रहेलिकादयः प्रकाश्यन्ते।

अद्यत्वे देशे विदेशेषु च अस्याः पाठकानां संख्या इतरमासिक–पत्रिकाणां तुलनायामधिकतरा वर्तते।

'रावणेश्वर–काननम्'– 1996 वर्षतः प्रो.मोहनानन्दमिश्रः वैद्यनाथधामतः 'रावणेश्वरकाननम्' इति संस्कृत–मासिकपत्रिकां प्रकाशयति। अभयकुमार–शर्राफस्य संरक्षकत्वे मोहनानन्दमिश्रस्य च सम्पादकत्वे प्रकाश्यमानायामस्यां पत्रिकायां विविधलेखाः, पद्यानि, हास्यव्यङ्ग्यवार्ताः संस्कृतपाठाश्च प्रकाश्यन्ते। संस्कृतस्य शिक्षणार्थमेका सरणिः अत्रारब्धा यस्यां संस्कृतशिक्षायाः ज्ञानं सम्यक् प्रकारेण कार्यते। संस्कृतजिज्ञासूनां कृते नूनमेषा संग्रहणीया पत्रिका वर्तते।

'अमृतभाषा'– 1998 वर्षतः उडीशाराज्यस्य बालेश्वरतः डॉ. रामकुमारचन्द्रमिश्रस्य सम्पादकत्वे 'अमृतभाषा' इति मासिकी संस्कृतपत्रिका प्रकाश्यते। पत्रिकैषा स्वरूप–दृश्ट्या वार्तापत्रवत् प्रतिभाति यस्यां राजनीतिकविषयाणां वार्ताः सरलभाषया प्रकाश्यन्ते। पत्रिकैषा उद्घोषयति यत् 'अमृतभाषा' हि संस्कृतम्', 'संस्कृतं राष्ट्रभाषा स्यात्', पाठ्यक्रमे संस्कृतं बाध्यतामूलकं मा भवतु', 'सर्वेऽपि संस्कृतज्ञाः संस्कृतं वदन्तु', 'संस्कृत–माध्यमेन पाठयन्तु', 'संस्कृतस्य प्रचारं प्रसारञ्च कुर्वन्तु' इति।

'आर्षज्योतिः'– 1998 वर्षस्य ऑगस्टमासे नवदिल्लीतः संस्थापकस्य आचार्यहरिदेवस्य संरक्षकस्य च श्रीकृष्ण–सेमवालस्य प्रयासैः श्रीमद्दयानन्द–वेदविद्यालयेन 'आर्षज्योतिः' इति संस्कृतमासिकी प्रकाशिता। प्रायेण चतुर्ण्णां वा पञ्चानां वर्षाणां प्रकाशनावरोधानन्तरमेषा साम्प्रतं देहरादूनस्थात् श्रीमद्दयानन्द–गुरुकुलज्योतिर्मठात् (पोंढातः) 2009वर्षतः पुनः श्रीधनञ्जय–शास्त्रिणा मुख्यसम्पादकत्वे संस्कृते हिन्द्यां चेति द्विभाषिक–मासिक–पत्रिकारूपेण नियतं प्रकाश्यते। अस्याः लक्ष्यमस्ति– अनुपलब्धस्य प्राचीनसंस्कृतसाहित्यस्य अन्वेषणम्, वैज्ञानिकरीत्या वैदिकसिद्धान्तानाम् उपादेयत्वं साधयित्वा वेदविज्ञानयोः सामञ्जस्यस्थापनम्।

इतः परमपि काश्चन नूतनाः संस्कृतभाषिक्यः, द्विभाषिक्यः त्रिभाषिक्यः वा (संस्कृतसमुपेताः) मासिक्यः पत्रिकाः भारतस्य कस्मादपि भागात् प्रकाशिताः भूताः भवेयुः च, चेत् तासां समावेशोऽपि अत्र कर्तव्योऽवशिष्यते।

अत्रेदमपि बोद्धव्यं यत् परतन्त्रभारते अर्थात् 1910 तम–वर्षतः हरिद्वारतः प्रकाशिता 'भारतोदयः', अपि च, 1924 तमवर्षतः, वाराणसीतः प्रकाशिता 'सूर्योदयः', इति पत्रिकाद्वयं संस्कृतपत्रकारितायाः आधारत्वेन प्राक्–स्वातन्त्र्यकालं स्वातन्त्र्योत्तरकालं च अञ्जसा संयोजयति।

### द्वैमासिक्यः संस्कृतपत्रिकाः

प्रियम्वदा– 1988 वर्षतः ओडिशा–राज्यस्य पुरीधामतः 'प्रियम्वदा'–इति द्वैमासिकी संस्कृतपत्रिका श्रीहरेकृष्णमहापात्रस्य श्रीगदाधरदासस्य च संयुक्तसम्पादकत्वे प्रकाश्यते। पत्रिकायामस्यां शास्त्रचर्चा, व्यङ्ग्यपद्यानि कथाः च प्रकाश्यन्ते।

प्रियवाक्– 1992 वर्षतः 'प्रियम्वदा'–इति द्वैमासिकपत्रिकायाः नामपरिवर्तनं कृत्वा 'प्रियवाक्'–इति जातम्। पुरीतः प्रकाश्यमानायाः अस्याः परिचालनसंस्थापकः प्रकाशकश्च वर्तते– डॉ.नागवरप्रसाद–रावचन्द्रपाटिः। सत्यामपि आर्थिकहानौ पत्रिकायाः प्रकाशनं सततं विधीयते।

भारतमुद्रा– 1993 वर्षतः अशोकपुरनाट्टुकारेण त्रिचूरतो द्वैमासिकीं 'भारतमुद्रा'–इति पत्रिकां सम्पाद्य प्रकाश्यते। अस्यां निबन्धाः प्रबन्धाः कविताः वार्ताश्च सरलया संस्कृतगिरा प्रकाश्यन्ते। संस्कृतकार्यक्रमाणां संस्कृतविदुषां च विषयेऽत्र विस्तरेण विवर्ण्यते।

एवमपि वक्तुं शक्यते यत् तादृश्यो द्वैमासिक्योऽपि वर्तन्ते यासां विस्तृतं विवरणं नोपलभ्यते, एतासु कानपुरतः प्रकाशितः 'वेदान्तसन्देशः', मुजफ्फरपुरतः प्रकाशितं 'संस्कृतदर्शनम्', एरल्लुतः 1987 वर्षतः प्रकाश्यमाना बङ्गला–संस्कृतयुता 'कामधेनुः' इति।

### त्रैमासिक्यः संस्कृतपत्रिकाः

स्वरमङ्गला– 1975 तमे वर्षे उदयपुरतः सम्पादकस्य पण्डित–गणेशरामशर्मणः सम्पादकीय–लेखेन सह 'स्वर–मङ्गला'–इति पत्रिकायाः प्रकाशनं पूर्वं शाण्मासिक–पत्रिकारूपेण जातम्। प्रथमाङ्के पण्डित–गणेशरामशर्मा स्वकीयसम्पादकीयेऽलिखत्–''अस्याः पत्रिकायाः स्वरमङ्गलायाः सोऽयं प्रथमोऽङ्कः भवतां तत्र भवतां पाठक–महानुभावानां

पुरतो वर्तते। आशास्यते संस्कृत–सेवानुष्ठाने सेयं स्वरमङ्गलापि स्वकीयं योगदानमर्पयिष्यति। देशस्यास्य संस्कृतपण्डिताः विशेषतो राजस्थानस्य विद्वान्सः तामिमां सद्योजातां मृदुलस्वभावां सुकुमारां संस्कृतपत्रकार–कुलकन्यामिव लालन–पालनपोषणैः संरक्ष्यात्मीयां विदध्युरिति।''

'स्वरमङ्गला' पूर्वं शाण्मासिकी पत्रिकारूपेण प्रकाशिता, परं च 1976 ईस्वीय–वर्षतः इयं त्रैमासिकी–पत्रिकारूपे प्रकाशिता जाता।

अस्याः पत्रिकायाः काले काले विशेषाङ्काः प्रकाशिताः अभूवन्। एष्वङ्केषु नेतॄणां मूर्धन्यानां विदुषां च जीवन–चरितानि तेषां कृतयश्च प्रकाशिताः अभूवन्। पत्रिकेयं शुद्धरूपेण उच्चस्तरीया साहित्यपत्रिका विद्यते। अस्यां प्रकाशिताः लेखाः न केवलं सरल–संस्कृते निबद्धाः सन्ति, अपि तु प्रौढभाषायां शोधपूर्णाः लेखाः अत्र सन्ति। प्रायेणेयं नियतरूपेण प्रकाश्यते।

परमार्थसुधा– वाराणस्याः सार्वभौमसंस्कृतप्रचारसंस्थानपक्षतः श्रीसत्य–नारायणशर्मणः सम्पादकत्वे श्रीवासुदेवशस्त्रिणः श्रीविद्याधरद्विवेदिनश्च उपसम्पादकत्वे 'परमार्थसुधा'–नाम्नी त्रैमासिकपत्रिका प्रकाशिता। 1976 वर्षतः अस्याः प्रकाशनं वाराणस्याः हौजकटोरातो विधीयते स्म। अस्यां विमर्शात्मकाः अनुसन्धानात्मकाः शास्त्रीयाः अप्रकाशितपूर्वाः उच्चस्तरीयाः मौलिकाश्च लेखाः, काव्यानि, नाटकानि, चरित्रवर्णनानि व्यङ्ग्य–सम्बद्धाः नव्याः कृतयः प्रकाश्यन्ते स्म।

अजस्रा– 1977 तमे वर्षे लखनऊ–स्थितायाः अखिलभारतीय–संस्कृतपरिषदः पक्षतः 'अजस्रा' इति त्रैमासिकी संस्कृतपत्रिका आरब्धा। अशोककुमार–कालिया–महोदयस्य सम्पादकत्वेऽस्यां पत्रिकायां कथा–लेख–कविता–नाटक–शोधनिबन्धाः प्रकाश्यन्ते। अस्याः उद्देश्येषु विभिन्न–पद्धतिजुषां रचना–संवर्धनम्, संस्कृतसम्पदायाः संरक्षणम्, प्रातिभ–नूतनकृतीनां संसर्जनम् इत्यादीनि अन्यतमानि सन्ति।

अर्वाचीनसंस्कृतम्– 1979 वर्षतः डॉ.रमाकान्तशुक्लस्य सम्पादकत्वे नवदिल्ल्याः देववाणीपरिषदा 'अर्वाचीनसंस्कृत'मिति त्रैमासिकी संस्कृतपत्रिकानारतं प्रकाश्यते। अस्यां पत्रिकायां शोधात्मक–निबन्धाः कविताः लघुनाटकानि, संस्कृतवार्ताभिश्च सहैव अर्वाचीनसंस्कृतसाहित्यस्य विपुलं

प्रकाशनं भवति।

संस्कृतसञ्जीवनम्– 1982 वर्षतः मिथिलेशकुमारीमिश्रमहाभागायाः मुख्यसम्पादकत्वे बिहारसंस्कृतसञ्जीवनसमाजेन पटनातः 'संस्कृत–सञ्जीवन'मिति त्रैमासिकी संस्कृतपत्रिका प्रकाश्यते। श्रीहरिप्रपन्नद्विवेदी सुश्रीवीनाओझा चेति अस्याः सम्पादकद्वयम्। अस्यां विविधाः निबन्धाः कविताश्च प्रकाश्यन्ते। वर्षान्ते एको विशेषाङ्कः अवश्यमेव प्रकाश्यते।

व्रजगन्धा– पण्डितस्य श्री–श्रीवरशास्त्रिणः पुण्यस्मृतौ 1985 वर्षतः पदुच्चेर्याः अरविन्दाश्रमस्य संस्कृतकार्यालयेन उषादेसाई–महाभागायाः सम्पादकत्वे 'लोकसंस्कृतम्'–इति त्रैमासिकी संस्कृतपत्रिका आरब्धा। 'लोकसंस्कृतम्' इति त्रैमासिकी संस्कृतपत्रिका आरब्धा। 'लोकसंस्कृतम्' इत्यस्याः सम्पादक–मण्डल्यां चिन्मयी–माहेश्वरी, नरेन्द्रश्च वर्तेते। अस्यां बालरचनाः, बालकथाः, कविताः, विविधाः लेखाः विभिन्नेषु च स्तम्भेषु नवीनरचनाः प्रकाश्यन्ते। शोधविषयकाणां निबन्धानां कृते एषा लोकप्रियास्ति। सम्प्रति संयुक्ताङ्करूपेण वर्षे वारद्वयमेषा प्रकाश्यते।

दूर्वा– 1986 वर्षतः मध्यप्रदेशस्य संस्कृताकादम्या भोपालतः डॉ. राधावल्लभत्रिपाठिनः सम्पादकत्वे 'दूर्वा' इति त्रैमासिकी संस्कृतपत्रिका आरब्धा। अस्यां पत्रिकायां गवेषणात्मकाः निबन्धाः, नूतनानि पद्यानि, नाटकानि, कथाः, चिन्तनानि समीक्षाः च प्रकाश्यन्ते। पत्रिकायाः प्रकाशितेषु विशेषाङ्केषु पाटलसुरभि–विश्वकविता–संस्कृतकुम्भकलि–बालसाहित्य–स्वर्णिमस्वतन्त्रता–कारगिलविजयादयोऽन्यतमाः सन्ति। नयनाभिराम–सज्जया संवलितेयं 'दूर्वा' विदुषां साहित्यसंस्कृतप्रेमिणां च चेतांसि आकर्षयति।

विश्वभाषा– 1986 वर्षतः वाराणसीतः पण्डितगुलामदस्तगीर–अब्बासअली–विराजदारस्य प्रधानसम्पादकत्वे विश्वसंस्कृतप्रतिष्ठानस्य मुखपत्ररूपेण 'विश्वभाषा'–इति अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका आरब्धा। बालजगत्–युवमञ्च–रसवती–अक्षरबन्ध–ग्रन्थसमीक्षा–ज्ञानशिविर–योगासन–प्रतिष्ठानवार्ता–संस्कृतवादिषु अस्याः स्थायिस्तम्भेषु लेखाः वार्ताश्च प्रकाश्यन्ते। काशीराजस्य श्रीविभूतिनारायणसिंहस्याध्यक्षे इयमारब्धासीत्। संस्कृत–संस्कृति–संरक्षणे तत्परा एषा बुद्धपूर्णिमा–

स्वातन्त्र्यदिवस–दीपावलि–गणतन्त्रदिवसेति अवसर–चतुष्टये प्रकाश्यते।

अनादिवाक्– 1988 वर्षे आचार्यरामदयालोः सम्पादकत्वे नवदिल्लीतः संस्कृतसंस्थानेन स्वीयम् 'अनादिवाक्' इति त्रैमासिकं संस्कृतपत्रमारब्धम्। द्वितीयवर्षे एव एषा संयुक्ताङ्करूपेण प्राकाश्य अस्तङ्गता।

संस्कृतमञ्जरी– 1995 वर्षतः दिल्ल्याः संस्कृताकादम्या श्रीकृष्णसेमवालस्य सम्पादकत्वे 'संस्कृतमञ्जरी' इति त्रैमासिकी संस्कृत–पत्रिका आरब्धा। अस्यां विविधाः शोधनिबन्धाः, कथाः, पद्यानि, अकादम्याः कार्यक्रमाणां विस्तृतविवरणानि, संस्कृतजगतो वार्ताश्च प्रकाश्यन्ते। अस्याः ज्ञानविज्ञानादि–विशेषाङ्काः सर्वैरेव पठनीयाः संग्रहणीयाः च वर्तन्ते।

अमृतवाणी– 1996 वर्षतः श्रीरमेशचन्द्रशाहस्य प्रधान–सम्पादकत्वे डॉ.कुमारचन्द्रस्य च सम्पादकत्वे ओडिशा–राज्यस्य 'बालेश्वरम्'–तः 'अमृतवाणी'इति त्रैमासिकी संस्कृतपत्रिका प्रकाश्यते। जनानां समक्षं संस्कृतस्य लौकिकरूपस्य संस्थापनमस्याः मुख्यं लक्ष्यं वर्तते। आधुनिक–पत्रिका–प्रकाशनप्रणालीमनुसरन्ती एषा विविध–सज्जाभिरलङ्कृता आधुनिकी पत्रिका इव प्रतिभाति।

अन्याः अपि काश्चन त्रैमासिक्यः संस्कृतपत्रिकाः विभिन्न–भागेभ्यः प्राकाश्यमागताः, परं च तासां विस्तृतं विवरणं नैवोपलभ्यते। तादृशीषु राउरकेलातः 'उत्कलोदयः', भद्रकतः 'जनभारती', लखनऊतः 'प्रभातम्', पुरीतः 'दिग्दर्शिनी', इलाहाबादतः 'मनीषासूत्रम्', दरभंगातः 'विश्वमनीषा' (कामेश्वरसिंह–दरभंगा–संस्कृतविश्वविद्यालयस्य शोध–त्रैमासिकी), दिल्लीतः 'श्रेयः', मुजफ्फरपुरतः 'परमार्थसुधा' इत्यादयः अन्यतमाः सन्ति।

**चातुर्मासिक्यः संस्कृतपत्रिकाः**

सारस्वतम्– श्रीचन्द्रदीपशुक्लस्य प्रधानसम्पादकत्वे पटनातः 1997वर्षतः 'सारस्वतम्' इति चातुर्मासिकी संस्कृतपत्रिका प्रकाश्यते।

अस्यां विविधविषयसम्बद्धाः लेखाः, पद्यानि वार्ताश्च प्रकाश्यन्ते। पत्रिकायाः वर्षद्वयस्य अङ्कत्रयं भारतीयस्वाधीनता–स्वर्णजयन्तीवर्षे प्रकाशितम्।

आधुनिकसंस्कृतपत्रकारितायाः क्षेत्रे 'सारस्वतम्' इत्येकाकिन्येव चातुर्मासिकपत्रिकात्वेन विराजते।

इतः पूर्वम् 1906 ईस्वीये वर्षे 'केरल-ग्रन्थमाला' नाम्नी चातुर्मासिकपत्रिका कालीकटतः, 1930 तमे च वर्षे 'श्रीचित्रा' नाम्नी त्रावणकोरतः प्रकाशिते अभूताम्।

**शाण्मासिक्यः पत्रिकाः**

अध्ययनमाला– श्रीलालबहारदुशास्त्रिविद्यापीठस्य अनुसन्धानप्रकाशनेन 'अध्ययनमाला'–इति शाण्मासिकी पत्रिका 1972 वर्षतः आरब्धा। अस्यां विद्यापीठेऽध्यापननिरतानां विदुषां छात्राणां च शोधविषयकाः निबन्धाः, युगपदेव भारतस्य विभिन्नेषु भागेषु वर्तमानानाम् अनुसन्धान–विद्यापारङ्गतानां शोधकर्मनिरतानां च निबन्धाः प्रकाश्यन्ते स्म। साम्प्रतमस्य प्रकाशनं स्थगितम्।

संस्कृतविमर्शः– 1973 तमवर्षात् राष्ट्रियसंस्कृतसंस्थानेन (नवदेहलीतः) 'संस्कृतविमर्शः' इति शाण्मासिकी शोधपत्रिका आरब्धा। अस्यां विशुद्धरूपेण शोधप्रधानाः गवेषणात्मकाः लेखाः प्रकाश्यन्ते। अस्याः मुख्यसम्पादकः संस्थानस्य मान्यो निदेशको भवति। इतः पूर्वमस्यां पत्रिकायां प्रकाशिताः विशेषाङ्काः अस्याः प्रौढपाण्डित्यं प्रकटयन्ति।

भास्वती– 1976 वर्षात् श्रीअमरनाथपाण्डेयस्य सम्पादकत्वे काशीविद्यापीठस्य संस्कृतविभागात् 'भास्वती' नाम्नी शाण्मासिकी शोधपत्रिका आरब्धा। अस्यां विद्यापीठीयच्छात्राणामध्यापकानाञ्च गवेषणात्मकाः शोधनिबन्धाः प्रकाश्यन्ते स्म। पत्रिकेयं 1982 वर्षं यावत् प्रकाशिताभूत्।

संस्कृतवीणा– 1986 वर्षतः डॉ.चित्तरञ्जनदयालकौशलस्य सम्पादकत्वे 'संस्कृतवीणा'–इति शाण्मासिकी संस्कृतपत्रिका कुरुक्षेत्रतः प्रकाशिता। चतुःपृष्ठात्मिका पत्रिकेयं सततं नैव प्रकाश्यते।

परिशीलनम्– 1990 वर्षतः श्रीबलदेवोपाध्यायस्य प्रथमसम्पादकत्वे लखनऊतः उत्तरप्रदेशसंस्कृतसंस्थानेन शाण्मासिकी अनुसन्धानप्रधाना 'परिशीलनम्'–इति संस्कृतपत्रिका प्रकाशिता। अस्याम् अप्रकाशिताः श्रेष्ठाः अनुसन्धानात्मकाः लेखाः प्रकाश्यन्ते। शोधच्छात्राणां कृते नूनमेषा संग्रहणीया पठनीया च पत्रिका वर्तते।

आरण्यकम्– 1992 वर्षतः डॉ.गोपबन्धुमिश्रस्य सम्पादकत्वे आरातः संस्कृतप्रचारपरिषदः 'आरण्यकम्' नाम्नी शाण्मासिकी शोधपत्रिका प्रकाश्यते। अस्यां पत्रिकायां विमर्शात्मकाः अनुसन्धानात्मकाश्च शास्त्रीयाः अप्रकाशितपूर्वाः मौलिक–निबन्धाः प्रकाश्यन्ते। काव्यानि, नाटकानि, हास्य–व्यङ्ग्य–सम्बद्धाः नव्याः रचनाश्चापि अस्यां प्रकाश्यन्ते।

छन्दस्वती– 1997 वर्षतः उमाकान्तभट्टस्य सम्पादकत्वे भा.वं.रामप्रियस्य च सहसम्पादकत्वे कर्णाटकस्य मेलुकोटेतः 'छन्दस्वती'–इति शाण्मासिकी संस्कृत–पद्य–पत्रिका आरब्धा। सम्पादकोऽत्रोद्घोषयति यत् 'जीयात् सा ध्वनिभावरीतिमहिता छन्दस्वती भारती।' अस्यां पत्रिकायां काव्यपादः, शास्त्रपादः, विमर्शपादश्चेत्यादयः स्तम्भाः वर्तन्ते येषु केवलं पद्यानि प्रकाश्यन्ते। समस्यापूर्तौ (पद्यपूरण्याम्) रमणीयानि मनोहराणि च पद्यानि प्रकाशितानि। पाठकाः अपि स्वमन्तव्यानि पद्येषु एव प्रेषयन्ति।

प्रख्या– 1992 वर्षतः डॉ.राधावल्लभत्रिपाठिनः सम्पादकत्वे सागर–विश्वविद्यालयस्य संस्कृतविभागस्य 'प्रख्या'–इति शाण्मासिकी षोधपत्रिका आरब्धा।

शोधप्रभा– 'शोधप्रभा'–इति शाण्मासिकी शोधपत्रिका श्रीलालबहादुर–शास्त्रि–संस्कृतविद्यापीठेन प्रकाश्यते यस्यां शोधपूर्णाः गवेषणात्मकाः लेखाः, पद्यानि भाषणानि च प्रकाश्यन्ते।

दृक्– शाण्मासिकी पत्रिकैषा हिन्दी–संस्कृत–आङ्ग्लेति तिसष्षु भाषासु प्रकाश्यते। 1999 तम–वर्षादारब्धायाः 'दृक्'–पत्रिकायाः सम्पादकौ स्तः– डॉ.शिवकुमारमिश्रः डॉ.बनमालीबिश्वालश्च। पत्रिकैषा इलाहाबाद–(झूसी)तः निर्बाधं प्रकाश्यते।

कथासरित्– 2005 तमवर्षादारब्धा संस्कृतपत्रिकैषा साम्प्रतं समकालीनकथासाहित्यस्य अतितरां लोकप्रिया पत्रिका वर्तते। इलाहाबाद(झूसी)तः प्रकाश्यमानायाः शाण्मासिक्याः अस्याः पत्रिकायाः सम्पादकौ स्तः– डॉ.नारायणदाशः डॉ.बनमालीबिश्वालश्च।

प्राच्यज्योतिः– कुरुक्षेत्रस्य विश्वविद्यालयीय–संस्कृत–विभागस्य 'प्राच्यज्योतिः' इति शाण्मासिकी शोधपत्रिका अतिप्राचीना वर्तते। अस्यां

पत्रिकायां शोधपूर्णलेखानां गवेषणात्मकनिबन्धानां च सारांशः प्रकाश्यते। शोधच्छात्राणां कृते एषातीव समुपयोगिनी।

एवं हि, विभिन्नानां विश्वविद्यालयानां संस्कृतविभागेभ्यः शाण्मासिक्यः पत्रिकाः प्रकाश्यन्ते, एतासु प्रयागस्य 'विद्यापीठ–पत्रिका', लखनऊ–इत्यस्य 'ऋतम्', हैद्राबादतः 'इतिहासचयनिका', मुम्बईतः 'भारतीयविद्या' प्रभृतयः अन्यतमाः।

## वार्षिक्यः संस्कृतपत्रिकाः

मनीषा– 1975 तमे वर्षे श्रीलालबहादुरशास्त्रिकेन्द्रीयसंस्कृतविद्यापीठस्य स्नातकोत्तरविभागीया 'मनीषा' नाम्नी वार्षिकपत्रिका प्रकाशिता। अस्यां छात्राणां प्राध्यापकानां च लेखाः प्रकाशिताः।

ज्ञानरश्मिः– 1978 तम–वर्षे अस्मादेव उपरिलिखित–विद्यापीठात् 'ज्ञानरश्मिः' नाम्नी वार्षिकी पत्रिका प्रकाशितासीत्।

वैजयन्ती– 1976 तम–वर्षात् राजस्थानसंस्कृतसंवित्–संस्थया जयपुरात् 'वैजयन्ती'ति वार्षिकी पत्रिका आरब्धा। अस्याः पत्रिकायाः प्रकाशनं यद्यपि शीघ्रमेव अवरुद्धम्, परमस्याः प्रत्यङ्कः विशेषाङ्करूपेण प्रकाशितः– 1976 (प्रतिदर्शाङ्कः), 1977 (वेदाङ्कः), 1978 (इतिहासाङ्कः), 1979 (ज्योतिषाङ्कः) इत्यादयः। 1976 तमे वर्षेऽस्याः प्रथमाङ्के सम्पादकोऽलिखत्–"वैजयन्त्याः प्रकाशने संस्कृतज्ञाः नूनं तोषमेष्यन्ति, नवनवैः वस्तुविज्ञानैः च लाभान्विताः भविष्यन्ति। इयं च विश्वस्मिन् संस्कृतस्य विजयवैजयन्तीव भवन्ती समाजस्य समयानुकूलमुद्बोधनं समये–समये कुर्वाणा सर्वानेव भारतीयान् आह्लादयिष्यति।"

वैजयन्त्याः मुखपृष्ठेऽयं लोको मुद्र्यते स्म–

"कल्याणी देववाणीयं जनमानस–वल्लभा।
भवन्ती भव्यमादध्याद् वैजयन्ती समर्चिता।।"

मेधा– 1973–74 तमे वर्षे राजस्थान–विश्वविद्यालयस्य संस्कृतविभागेन 'मेधा' नाम्नी वार्षिकी संस्कृतपत्रिका प्रकाशिता। विभागीय–प्राध्यापकानां वित्तीयसाहाय्येन एषा प्रकाश्यते स्म।

ज्ञानाञ्जलिः– जयपुरस्य दादू–संस्कृतमहाविद्यालयेन 1983 तमे वर्षे 'ज्ञानाञ्जलिः' नाम्नी वार्षिकी पत्रिका प्रकाशिता। श्रीबक्षीरामस्वामी श्रीरामदेवसाहू चास्याः सम्पादकौ आस्ताम्। अस्यां पत्रिकायां प्रतिभावतां छात्राणां विदुषां च व्याकरण–साहित्य–संस्कृतभाषाविषयकाः लेखाः प्रकाश्यन्ते। पत्रिकायाः प्रकाशनं वित्तीयसाहाय्येन भवति स्म।

आदर्शः– हरिद्वारस्थितेन गुरुकुलकांगडी–विश्वविद्यालयस्य संस्कृत–विभागेन 1988 तमे वर्षे 'आदर्शः'–इति वार्षिकी पत्रिका आरब्धा। अस्यामपि विभागीयानां प्रध्यापकानां छात्राणां च लेखाः प्रकाश्यन्ते स्म।

श्यामला– 1989 तमे वर्षे डॉ.वंशीरामशर्मणः प्रबन्धसम्पादकत्वे हिमाचलकलासंस्कृतिभाषाकादम्या 'श्यामला'–इति वार्षिकी पत्रिका आरब्धा। अस्यां योग्यविदुषाम् अनुसन्धानपूर्णान् गम्भीरविषयान् सरलीकृत्य लेखाः प्रकाशिताः सन्ति। अस्यां प्रायेण हिमाचल–प्रदेशीयानां विदुषां छात्राणां च समधिकाः लेखाः प्रकाशिताः।

जयन्ती– 1989 तमे वर्षे जयपुरस्य केन्द्रीय–संस्कृत–विद्यापीठेन 'जयन्ती'ति वार्षिकपत्रिकायाः प्रकाशनमारब्धम्। विद्यापीठस्य छात्राणां विदुषाम्, दिल्ली–वाराणस्योः विदुषां च लेखाः अस्यां प्रकाशिताः। अत्र प्रकाशिताः दर्शन–साहित्य–व्याकरण–विषयकाः लेखाः स्वीयं गाम्भीर्यं प्रकटयन्ति।

लोकप्रज्ञा– 1990 तमे वर्षे पुरीतः लोकभाषा–प्रचार–समित्या 'लोकप्रज्ञा'–इत्याख्या वार्षिकी शोधपत्रिका आरब्धा। अस्यां देशस्य विभिन्नानां विदुषां शोधलेखाः प्रकाश्यन्ते।

विमर्शः– 1993 तमे वर्षे लखनऊविश्वविद्यालयस्य संस्कृत–प्राकृतभाषा–विभागस्य शोधविमर्शगोष्ठ्या 'विमर्शः' नाम्नी वार्षिकी पत्रिका प्रकाशिता। अस्याः प्रथमाङ्कत्रयम् 'विमर्शः' नाम्ना प्रकाशितम्, चतुर्थाङ्कतः पत्रिकायाः नाम परिवर्त्य 'वाङ्मयी'ति विहितम। पूर्वम्, पत्रिकायामस्यां केवलं शोधच्छात्राणामेव शोधपत्राणि प्रकाश्यन्ते स्म, किन्तु अङ्कचतुष्टयात् विभागीयाध्यापकानां शोधविदुषां चापि महत्त्वपूर्णानि उच्चस्तरीय–शोधपत्राणि प्राकाश्यमानीतानि।

भारतस्य प्रायः सर्वेषां विश्वविद्यालयानां संस्कृतविभागाः वार्षिकीः पत्रिकाः प्रकाशितवन्तः। काश्चन पत्रिकाः अद्यत्वेऽपि प्रकाश्यन्ते, काश्चन च मध्येमार्गमेव विलयङ्गताः। एतासु दिल्लीविद्यापीठस्य 'शिक्षाज्योतिः', बैंगलूरुतः 'प्रज्ञालोकः', मैसूरुनगरस्य महाराजा–संस्कृत–विद्यालयस्य 'चन्द्रिका', दिल्लीतः 'युगप्रभा', मद्रासतः 'संस्कृततरङ्गः', बृहद्गुजरातसंस्कृतपरिषदः 'सामञ्जस्यम्' इत्यादयः प्रमुखाः सन्ति। 'सामञ्जस्यम्'–इति पत्रिकायाः प्रकाशनं साम्प्रतं संस्कृत–गुजराती–भाषयोः भवति।

संस्कृत–पत्रकारितायाः आधुनिके काले त्रीणि दिनपत्राणि, एकं साप्ताहिकं पत्रम्, प्रायेण दश पाक्षिक्यः पत्रिकाः, प्रायेण चतुर्दश मासिक्यः, तिस्रो द्वैमासिक्यः, प्रायेण द्वादश त्रैमासिक्यः, एका च चातुर्मासिकी, प्रायेण शोडश शाण्मासिक्यः शोडशप्रायाश्च वार्षिक्यः संस्कृतपत्रिकाः विराजन्तेतमाम्।

संस्कृत–पत्रकारितायाः समुन्नयनाय विकासाय च सम्प्रति ये यत्नाः विधीयन्ते तेषु संस्कृत–पत्रकारिता–विस्तरजातं सफलं, सुकरं समुपयोगि च साधनम्। एतद् आकल्प्यते यत् संस्कृत–पत्रकारिता–माध्यमेन संस्कृत–वाङ्मयस्य संस्कृतभाषायाः च व्यवहार्यत्वं सुप्रतिष्ठितं नूनं भवितेति विश्वसिमः।

---

# पञ्चमोऽध्यायः

## संस्कृतपत्रकारितायाः परिवर्तितरूपाणि

**प्रस्तावना**

वार्तानां समाहरणं संकलनं च, लेखानां संग्रहः सम्पादन–कार्यञ्च, पत्रपत्रिकाणां प्रकाशनं मुद्रणादिकं च पत्रकारितायाः एव समन्वितस्वरूपं वर्तते। परञ्च कालानुक्रमेण पत्रकारिताक्षेत्रे नानाविधानि परिवर्तनानि संजातानि।

साम्प्रतं केवलं वार्तानां सम्पादनं मुद्रणं प्रसारणं वा एव पत्रकारिता नैवास्ति। मानवजीवनस्य व्यापकं क्षेत्रं पत्रकारितायां समाविष्टं समवलोक्यते।

पत्रकारिता नाम सम्प्रति नैतिक–सामाजिक–सांस्कृतिकमूल्यानां समसामयिकघटनाचक्रनिकषे परीक्षणस्यैकं समुचितं समर्थं च साधनं वर्तते।

ज्ञान–विज्ञान–कला–साहित्य–संस्कृति–संघर्ष–क्रान्त्युत्थान–पतनादीनां विविधभावानां मनोहरं यथार्थञ्च युगानुरूपं चित्रं प्रतिबिम्बं च पत्रकारितादर्पणे द्रष्टुं शक्यते।

कालक्रमानुसारेण संजायमानैः विविधैः वैज्ञानिकाविष्कारैः पत्रकारितायाः स्वरूप–परिवर्तनं जातम्। साम्प्रतं न केवलं पत्रपत्रिकाणां मुद्रणमेव पत्रकारिताक्षेत्रे परिगण्यते, अपि तु दृश्य–श्रव्य–पत्रकारितायाः वैद्युदाणविकपत्रकारितायाश्चापि तादृशमेव, आहोस्वित् ततोऽपि अधिकतरं महत्त्वं वर्तते।

अस्य अध्यायस्य प्रमुखावधानमिदमेव यत् एकविंशतितमेऽस्मिन् शताब्दे मुद्रणमाध्यमः [Print Media] यद्यपि तावान् एव प्रभावी व्यवहार्यः च अस्ति, परन्तु सूचना–प्रविध्योः क्रान्तिकारणात् पत्रकारितायाः क्षेत्रं व्यापकतरं द्रुततरं विश्वजनीनं च संजातम्।

एतत्परिवर्तनं संस्कृत–पत्रकारितायामपि समापन्नम्। स्वातन्त्र्य–प्राप्तेः प्राक्तनकाले तदुत्तरवर्तिनि च काले हिन्दी–आङ्ग्लक्षेत्रीय–भाषाणां दैनिक–साप्ताहिक–पाक्षिक–मासिक–पत्रपत्रिकाणां प्रकाशनमिव

संस्कृत–भाषायामपि पत्रपत्रिकाः प्रकाशिताः जाताः।

साम्प्रतं श्रव्यपत्रकारिताक्षत्रे आकाशवाण्याः राष्ट्रिय–प्रसारणे प्रतिदिनं द्विवारं संस्कृतवार्ता–प्रसारणं भवति। दूरदर्शनतः प्रतिदिनं प्रातः संस्कृतवार्ताः प्रसार्यन्ते। विविधाः दृश्य–प्रसारणावृत्तयः [TV-Channels] स्वीयकार्य–क्रमेषु धारावाहिकेषु वा संस्कृतभाषायाः संस्कृतवाङ्मयस्य चोपयोगं कृत्वा देववाण्या अनया उपकृताः भवन्ति।

वैद्युदाणविक–माध्यमेषु [Electronic Media] अन्तर्जाल–पोर्टल्–ब्लॉग्स्पॉट्–ई–संस्कृतपत्रिका–माध्यमेन संस्कृतस्य सुमहान् प्रयोगो विधीयते।

### मुद्रणमाध्यमेषु [Print Media] संस्कृतपत्रकारिता

संस्कृतपत्रकारितायाः प्रारम्भिके काले पत्रपत्रिकाणां मुद्रणमाध्यमेन प्राचीनं नवीनं च साहित्यं प्रकाश्यते स्म।

पुरा हिन्दीभाषायाम् आङ्ग्लभाषायामितरप्रान्तीयभाषायां वा प्रायेण पत्रकारितायाः लक्ष्यमासीत्– समसामयिकघटनानां पत्रपत्रिकादीनां मुद्रणमाध्यमेन संसूचनं विश्लेषणञ्च, परन्तु संस्कृतभाषायां नूतनसाहित्यस्य प्रकाशनाय प्राचीनसाहित्यस्य च विवेचनप्रकाशनयोः कृते संस्कृतपत्रकारिता आरब्धेति वदामश्चेत् नात्रास्ति किञ्चित् अनुचितम्। 'केकी'–'संस्कृत–रत्नाकर'–'सहृदया'–'संस्कृतचन्द्रिका'–प्रभृतयः संस्कृतपत्रिकाः आरम्भे नवीनं साहित्यं नवीनासु विधासु प्रकाशयन्ति स्म। ईस्वीये 1871 तमे वर्षे लाहौरतः 'विद्योदय'–नामकं मासिकं संस्कृतपत्रं प्रकाशितमासीत्। मासिकपत्रेऽस्मिन् प्राचीनाः अर्वाचीनाश्च ग्रन्थाः प्रकाशिताः, सामाजिकान् सांस्कृतिकान् च विषयान् आधष्त्य विभिन्नाः निबन्धाः लेखाश्च प्राकाश्यमुपगताः। कालोऽयम् ऊनविंशशताब्दस्य अन्तिमचरणाद् आरभ्य विंशशताब्दस्य अन्तिमचरणं यावत् अर्थात् 1970 तमं वर्षं यावत् प्रायेण संस्कृतपत्रकारितायाः अन्यासां च भाषाणां मुद्रणमाध्यमकालः आसीत्।

मुद्रणमाध्यमः साम्प्रतमपि तावान् एव व्यवहार्यः उपयोगी च वर्तते परञ्च अद्यत्वे ( एकविंशशताब्दस्य प्रथमदशाब्दावधौ ) कर्गदविरहित–(Paperless Working)–कार्यपद्धतेः महीयान् प्रचारो विधीयते।

साम्प्रतं नानाविधानि वैद्युदाणविकोपकरणानि (Desktop, Laptop, Palmtop, Mobile Phone, Pan Drive,Harddisk, Pager, Electronic Diary Etc.) वर्तन्ते येन मुद्रण–माध्यमानां प्रभुत्वं नूनम् अपचितम्।

नातिचिरमेव अस्माभिः आकाशवाणीतः वार्ताप्रसारितास्ति यत् मानवसंसाधनविकासमन्त्रिणा तादृशस्य अल्पमूल्यात्मकस्य संगणकस्य लोकार्पणं विहितम्, यद्धि प्रायेण सार्धैकसहस्ररूप्यकमूल्यात्मकमेव भविष्यति। एवं हि, इतः परं विद्यालयानां महाविद्यालयानां विश्वविद्यालयानां च प्रत्येकमपि छात्राय एनत् उपायनीकर्तुं शक्ष्यते। छात्राः संगणकानि प्रयुञ्जन्ति चेत्तदा कर्गदोपयोगोऽपचेष्यते। अपरैका महती समस्या विश्वस्मिन् विश्वे साम्प्रतमस्माभिः सम्मुखीक्रियते, सा चास्ति– विश्वोष्णता (Global Warming)। कर्गदानां निर्माणार्थं काष्ठानि अपेक्षन्ते, काष्ठावाप्तये वृक्षाः पादपाश्च उत्पाट्यन्ते उच्छेद्यन्ते च। वृक्षाणामुच्छेदनकारणात् वैश्विकोष्णतापरिमाणं विवर्धते– इति कृत्वापि साम्प्रतं मुद्रणमाध्यमानां तावान् उपयोगो नैव प्रोत्साह्यते। मुद्रणमाध्यमानाम् उपयोगित्वं शनैः शनैः निरुत्साह्यते तथापि मानवजीवने मुद्रणपद्धतेः परम्परा न्यूनाधिक्येन यथावत् अवश्यं प्रवर्तिष्यते।

**श्रव्यसञ्चारमाध्यमेषु संस्कृतपत्रकारिता**

'मार्कोनी'–इति विज्ञानिना रेडियो–इति ध्वनिप्रसारकयन्त्रम् आविष्कृतम्। विंशशताब्दस्य द्वितीयदशाब्दे पाश्चात्त्यदेशेषु, तदनन्तरं तृतीयदशाब्दतो विश्वस्मिन्नपि विश्वे द्वितीय–विश्वयुद्धकारणात् रेडियोयन्त्रस्य प्रयोगो व्यवहार्यो लोकप्रियश्च जातः।

भारते पूर्वं 'ब्रिटिश्ब्रॉडकास्टिंग्'–इति नाम्ना अनन्तरं हिन्द्याम् 'आकाशवाणी' आङ्ग्लभाषायां च 'All India Radio' इति नाम्ना प्रसारणारम्भोऽजायत।

स्वातन्त्र्यावाप्तेः प्रायेण सप्तविंशतिवर्षेभ्यः अनन्तरम् आकाशवाणीतः 1974 तमे वर्षे जूनमासस्य त्रिंशत्तमे दिनाङ्के प्रातः नववादने प्रथमवारम् 'इयम् आकाशवाणी, सम्प्रति वार्ताः श्रूयन्ताम्कृ'–इति कृत्वा नियतं

पञ्चमिनटात्मकं संस्कृतवार्ताप्रसारणम् आरब्धम्। अनेन सहैव श्रव्य-पत्रकारिता-क्षेत्रे संस्कृतभाषया पदं न्यधायि। आरम्भे वार्ताप्रसारणमिदं प्रायोगिकम् आसीत्, परञ्च वार्ताप्रसारणस्य साफल्यं लोकप्रियत्वं चावेक्ष्य प्रातःकालिकं संस्कृतवार्ताप्रसारणं प्रातः सप्तवादने प्रसारयितुम् आरब्धम्, कतिपयमासानन्तरञ्च अपरमेकं पञ्चमिनटात्मकं सायङ्कालिकं संस्कृतवार्ताप्रसारणं सायं दशकलोत्तरषड्वादनतः प्रसारयितुमारब्धम्। पुनश्च, कतिपयमासानन्तरं प्रातःकालिकप्रसारणस्य कालः, परिवर्त्य पञ्चमिनटोन-सप्तवादनमितो विहितः। विगतेभ्यः सप्तत्रिंशद्वर्षेभ्यः संस्कृतवार्ता-प्रसारणमिदम् अस्खलितरूपेण सुरभारतीसेवायां संलग्नं वर्तते।

## संस्कृतवार्ता-प्रसारणस्य लाभाः

संस्कृतवार्ताप्रसारणेन अनेके लाभाः अधिगताः। सर्वप्रथमन्तु भ्रान्तिरियं व्यपगता यत् संस्कृतभाषा कठिनास्ति। राष्ट्रियाणाम् अन्ताराष्ट्रियाणाञ्च घटनानां सद्योविवरणं श्रुत्वा जनाः अनुभवन्ति यत् हिन्द्याम् अपरस्याञ्च क्षेत्रीयभाषायामिव संस्कृतभाषायामपि संस्कृतवार्ता-श्रवणं सुखदं श्रुतिमधुरञ्च वर्तते। अपरासु भाषासु यथा पत्रकारितायाः लक्ष्यत्रयं सुसेव्यते तद्वत् संस्कृतभाषायाः अनेन वार्ताप्रसारणेन अपि लक्ष्यत्रयं प्रपूर्यते।

तदित्थम्- सूचनाप्रदानम्, शिक्षाप्रदानम्, मनोरञ्जनञ्च। पत्रकारितायाः लक्ष्यत्रयं प्रायेण पत्रपत्रिकादिभिः श्रव्य-दृश्य-प्रसारणैः चलचित्रादिभिश्च पूर्णतां नीयते।

संस्कृतवार्ताप्रसारणस्य द्वितीयलाभः विद्यालयीयमहाविद्यालयीयच्छात्राणां कृतेऽजायत। लौकिकसंस्कृतं केन प्रकारेण व्यवहर्तव्यम्, नूतनाः शब्दाः केन प्रकारेण प्रयोक्तव्याः, संस्कृतभाषायाः सम्भाषणस्वरूपञ्च कीदृशं भवेदिति कृत्वापि आकाशवाण्याः संस्कृतवार्ताप्रसारणेन महत् साहाय्यं विहितम्।

संस्कृतवार्ताप्रसारणस्य श्रोतॄणां पत्रैः, विद्युत्पत्रैः [E-Mails], दूरभाषिकप्रतिक्रियाभिश्च एतत् तु सुसिद्धं यत् जनाः न केवलं वार्ताश्रवणार्थं संस्कृतवार्ताप्रसारणं शृण्वन्ति अपि तु, संस्कृतभाषां श्रोतुं संस्कृतवार्ता-प्रसारणमिदं शृण्वन्ति।

एवं हि, विद्यालयीयच्छात्राः ये हि संस्कृतविषयमभिलक्ष्य अध्ययनं कुर्वन्ति, ते गृहकार्यत्वेन (HomeWork) संस्कृतवार्ताप्रसारणमाश्रित्य संस्कृतविषयकं गृहकार्यं कुर्वन्ति। विगतवर्षद्वयात् www.newsonair.com इति वेब्साइट्–माध्यमेन अन्तर्जाल–द्वारा (Internet) संस्कृतवार्ता–प्रसारणद्वयस्य पाठ्यं (PDF-सञ्चिका–माध्यमेन) श्रव्यं च स्वरूपं जगति कस्मिन्नपि भागे चतुर्विंशतिहोरावधौ कस्मिन्नपि काले पठितुं श्रोतुं च शक्यते।

एवं हि, रेडियो–आविष्कारानन्तरं ध्वन्यङ्कन–यन्त्रस्य (Recorder, Two-in-One) आविष्कारेण सहैव श्रव्यसंचारमाध्यमेषु संस्कृतस्य महीयान् प्रयोगो जातः।

चलचित्राणां निर्माणप्रदर्शनादिकं तु विंशशताब्दस्य द्वितीयदशाब्दादेव आरब्धमासीत्। चलचित्रेष्वपि (दृश्य–श्रव्यमाध्यमे) संस्कृतभाषायाः संस्कृतवाङ्मयस्य च प्रयोगो विरलतया आरब्धः।

संक्षेपेण वयं वक्तुं शक्नुमः यत् विंशशताब्दस्य उत्तरार्द्धे श्रव्य–संचारमाध्यमेषु संस्कृतस्य अधिकाधिकप्रयोगेण संस्कृतपत्रकारिता वृद्धिङ्गता, संस्कृतसाहित्यसर्जनेऽपि वैविध्यमुपपादितम्।

## श्रव्य–दृश्य–माध्यमेषु ( Audio-Visual Media ) संस्कृतपत्रकारिता

आकाशवाणीतः संस्कृतवार्ताप्रसारणस्य आरम्भस्य पश्चात् अञ्जसा द्विमासाधिकविंशतिवर्षाणाम् अन्तरालानन्तरं दूरदर्शनेति भारतप्रशासनस्य दृश्यप्रसारमाध्यमेन प्रतिरविवासरं साप्ताहिकं दशमिनटात्मकं संस्कृतवार्ता–प्रसारणम् आरब्धम्।

दूरदर्शनात् 1994 तमे ईस्वीयवर्षे ऑगस्ट–मासस्य एकविंशतिदिनाङ्के रविवासरे (व्यासपूर्णिमेति संस्कृतदिवसावसरे) मध्याह्ने सार्धैकवादनतो दशमिनटावधिकं प्रथमं संस्कृतवार्ताप्रसारणम् आसां पङ्क्तीनां लेखकेन सौभाग्याद् आरब्धम्। अनेन दूरदर्शनीयसंस्कृतप्रसारणारम्भेण सहैव संस्कृतपत्रकारितया दृश्यमाध्यमेषु पदं न्यधायि।

प्रायेण अष्टभ्यः वर्षेभ्यः अनन्तरं दूरदर्शनीयं दशमिनटात्मकं साप्ताहिकं

संस्कृतवार्ताप्रसारणं पञ्चमिनटात्मकं विधाय दैनन्दिनं विहितम्, अस्य प्रसारणकालोऽपि परिवर्त्य प्रातः दशवादनात्मको विहितः। वर्षद्वयानन्तरम्, पुनरपि प्रसारणकालः परिवर्त्य प्रातः पञ्चमिनटोन–सप्तवादनमितो विहितोऽस्ति।

एवं रीत्या यथा हिन्दी–आङ्ग्ल–उर्दू–भाषाणां दूरदर्शनीय–वार्ताप्रसारणानि विधीयन्ते तद्वदेव संस्कृतभाषिकं दृश्यं वार्ताप्रसारणं विधाय दूरदर्शनेन संस्कृतपत्रकारितायाः नवोन्मेषः प्रतिष्ठापितः।

## वैद्युदाणविक–सञ्चारमाध्यमेषु संस्कृतपत्रकारिता

मुद्रणसंचारमाध्यमानां कालानन्तरं संस्कृतपत्रकारितया श्रव्य–संचार–माध्यमेषु दृश्य–संचार–माध्यमेषु च स्वीय–विशिष्ट–भूमिका–निर्वहणपुरस्सरम् इतर–व्यवहार्य–भाषाः इव स्वीयं व्यवहार्यत्वम् उपयोगित्वञ्च प्रमाणीकृतम्।

अत्रान्तरे, प्रायेण विंशशताब्दस्य अष्टम–दशाब्दात् विभिन्नानां जनसंचारमाध्यमीयोपकरणानां भारते संजायमानोपयोगकारणात् सूचना–प्रविध्योः क्रान्तिः समायाता। संस्कृतपत्रकारिता श्रव्य–दृश्य–माध्यमयोः बद्धमूला सती सामान्यजनैरपि सुग्राह्या सञ्जाता। दृश्यमाध्यमानां प्रभुत्वप्रसारात् प्राक् श्रव्य–माध्यमः स्वीयं व्यापकत्वं लोकप्रियत्वम् उपयोगित्वं च प्रामाणयत्। तदनु, दृश्य–माध्यमानां प्रसारः तावान् लोकप्रियोऽजायत यत् गृहे गृहे कुटीरे कुटीरे टीवी–यन्त्राणि अवालोक्यन्त।

अस्मिन्नेव काले टेलीप्रिन्टर्–इति दूरस्थमुद्रकयन्त्राणां स्थाने फैक्स्–इति छायाप्रतिप्रेषयितृयन्त्रम् आविष्कृतम्, युगपदेव पेज़र्–वितन्तु–जंगमदूरभाषादयोऽपि व्यवहार्याः संजाताः। एतेषामुपकरणानामुपयोगकारणात् पत्रकाराः वार्ताहराश्च वृत्ताहरणे वार्ताप्रसारणे च द्रुतत्वं सौकर्यञ्चानुभ–वितुमारभन्त।

पत्रकारितायाः नवीनमिदं स्वरूपं सुतरां चमत्कारपूर्णं हृदयावर्जकं सत् सामाजिकार्थिकपरिवर्तनकरमपि सिद्धम्। राजनीतिकक्षेत्रेऽपि पत्रकारितायाः अस्य नूतनस्वरूपस्य कारणात् वैविध्यं गतिमत्वञ्च समायाते।

परञ्च इतः परमपि किञ्चित् अपरं स्वरूपवैचित्र्यमत्र संभाव्यमासीत् येन हि पत्रकारिताक्षेत्रे मौलिकपरिवर्तनमापन्नम्। तद् यथा– संगणकानाम् अन्तर्जालस्य च प्रयोगेण सूचना–स्रोतांसि बाहुल्येन प्रादुरभूवन्। महाकविना भर्तृहरिणा प्रोक्तं यत् 'संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम्' इति।

एवं हि, अपरमेकं जालमस्ति यस्य सन्दर्भोऽत्र उद्ध्रियते–

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम्।
उद्धर्तुकामः सनकादिसिद्धान् एतद्विमर्शे शिवसूत्रजालम्।।

साम्प्रतमत्र तृतीयजालमुल्लिख्यते यस्य प्रभावेण आधुनिकपत्रकारिताक्षेत्रे चमत्कारपूर्णं परिवर्तनं सञ्जातम्। तदस्ति– www अर्थात् World-Wide-Web –विश्व–व्यापि–जालम्। अनेन विश्वव्यापिना जालेन (Internet–इत्यनेन) साम्प्रतं विभिन्न–प्रकारिकाणां सूचनानाम् अनेकविधानि स्रोतांसि अस्माकं सन्निकर्षे एव समापतन्ति।

स्वर्णिमावसरेणानेन लाभान्विताः संस्कृतानुरागिणः संस्कृताभिमानिनश्च विद्वांसः नैकत्र ई–संस्कृत–पत्रिकाः ( Electronic Sanskrit Journals) संस्कृत–वेब्साइट्स् ( संस्कृत–जालपुटानि ) ब्लॉग्स्पॉट्–प्रणाल्यश्च आरभन्त। अनेन प्रकारेण एकविंश–शताब्देऽस्मिन् प्रथमदशाब्दे संस्कृत–पत्रकारितायाः अधुनातनं स्वरूपं निकामं सुन्दरम्, सुतरां सम्मोहकम्, अतितराञ्च आनन्ददायकं सञ्जातम्।

**ई–संस्कृतपत्रिकाः**

यथा भवान् जानाति यत् मैसूरुतः 'सुधर्मा' इति संस्कृत–दिनपत्रिका विगतेभ्यः चत्वारिंशद्वर्षेभ्यो नियतं प्रकाश्यते, सा च – sudharma.epapertoday.com इति संकेतेन अन्तर्जाले पठितुं शक्यते।

'जाह्नवी' इत्यपरैका ई–संस्कृतपत्रिका वर्तते, या हि बिपिनकुमारझा–इत्यनेन मुम्बईतः प्रकाश्यते। अस्याः पत्रिकायाः अन्तर्जाल–संकेतोऽस्ति– http://jahnavisanskritejournal.com

पट्टम्बी–स्थलस्य श्रीनीलकान्तेन 'विज्ञानचिन्तामणि' इति ई–संस्कृत–

पत्रिका आरब्धास्ति। सा च– http://vijnanacintamani.org – इति संकेतेन अन्तर्जाले अधिगन्तुं शक्यते।

'जम्बूद्वीप'–इत्यपरैका सुप्रसिद्धा लोकप्रिया अनेक–सूचना–साहित्य–सामग्री–सम्भरिता ई–संस्कृतपत्रिका अस्ति या हि http://www.jambudvipa.net – इति संकेतेन अवाप्तुं शक्यते।

आकाशवाणीतः प्रसार्यमाणाः संस्कृतवार्ताः www.newsonair.com इति संङ्केतेन 'Read' इत्यत्र नोदनात् पठितुम्, अपि च, 'Listen' इत्यत्र नोदनात् श्रोतुं शक्यते।

यद्यपि अन्तर्जाले अपराणि अपि संस्कृतवार्ता–विषयकाणि पुटकानि सन्ति। तानि यथा–

संस्कृत–वार्ताः– दूरदर्शनस्य TV Service

संस्कृत–वार्ताः– Daily News Headlines

संस्कृतवार्ताः– Audio Archive इत्यादयः।

www.sanskritnewspaper.com

एतत्परम्, www.samskritam.wordpress.com, learnsanskrit.wordpress.com, http://samskrutam.com प्रभृत्तयोऽनेकाः वेब्साइट्स्–पत्रिकाः वर्तन्ते।

संस्कृत–वेब्साइट्स्–ब्लॉग्स्पॉट्–प्रणाल्यश्च–अनुदिनम् अन्तर्जाले अनेकविधानि वेब्साइट्स्–इति विद्युत्तरङ्ग–पुटकानि ब्लॉग्स्पॉट्–इति स्वविचाराभि–व्यक्तिविषयकाणि लेखनानि च संस्कृतभाषायां विवर्धन्ते। एतेषाम् एका संक्षिप्तसूची अत्र प्रदीयते–

→ http://samskritabharati.org

→ http://yaajushi.blogspot.com

→ http://www.sanskritbhasha.blogspot.com

→ http://sanskritlinks.blogspot.com

→ http://sanskritam.ning.com

→ http://samskritwisdom.wordpress.com

→ http://kalidasa.blogspot.com

→ http://learnsanskrit.wordpress.com
→ http://practicalsanskrit.blogspot.com
→ http://venetiaaansell.wordpress.com
→ http://koham.wordpress.com
→ http://yaajushi.wordpress.com
→ http://slabhyankar.wordpress.com
→ http://satyayugam.blogspot.com
→ http://nimittam.blogspot.com
→ http://triveni-pittsburgh.blogspot.com
→ http://vykharee.blogspot.com
→ http://samskrute.blogspot.com
→ http://samskritam.wordpress.com
→ http://paniniyam.wordpress.com
→ http://vagartham.blogspot.com
→ http://samskritforall.wordpress.com
→ http://sanskrut.wordpress.com
→ http://srinilakshmi.wordpress.com
→ http://kaadambari.wordpress.com

एतासु विभिन्नासु अन्तर्जाल–सञ्चिकासु कस्याञ्चित् संस्कृत–गीतानि, नाटकानि, साहित्य–चर्चा, पठनम्, लेखनम्, सरस–श्लोकाः, कथाः, वार्ताः, विनोदकणिकाः कस्याञ्चित् च अद्यतन–विषयान् आधष्त्य संस्कृतेन इतिवृत्त–लेखनम्, अपरस्यां च संस्कृत–शिक्षणम्, इतरस्याम्, संस्कृत–व्याकरणम्–इत्यादयो विभिन्नाः विषयाः लभ्यन्ते। एते च विषयाः संस्कृतस्य आधुनिक–पत्रकारितायाः स्वरूपाणि वितन्वन्ति इति तु निश्चप्रचम्।

———————————

# षष्ठोऽध्यायः

## संस्कृतपत्रकारितायाः समस्याः समाधानानि च

### प्रस्तावना

संस्कृतानुरागिणां संस्कृताभिमानिनां च जीवनलक्ष्यं भवति– ''सरस्वती श्रुतिमहती महीयताम्।'' अनया भावनया प्रेरिताः संस्कृत–सेविनः संस्कृतविद्वांसः च पत्रपत्रिकाणां प्रकाशन–माध्यमेन जनेषु देववाण्याः गौरवं प्रसारयन्तः प्रचारयन्तश्च भारतीयं प्राच्यं रिक्थं वितरन्तः, संस्कृतसाहित्यं च नूनं विवर्धयन्ति। युगपदेव ते नवनवान् विचारान्, चिन्तनानि चोद्भावयन्ति। अस्मिन्नेव सन्दर्भे संस्कृत–पत्रकारितायाः महत्त्वं जरीजृम्भते।

अद्यत्वे यथा संचारमाध्यमानां सौविध्यं वर्तते, त्रिंशत्–चत्वारिंशद्वर्षेभ्यः प्राक् तथैतादृशं नासीत्। तदानीन्तने कालेऽपि कदाचित् लघ्वीनां पत्रपत्रिकाणाम्, कदाचिद्वा मध्यमाकारयुतानां पत्रपत्रिकाणां माध्यमेन पत्रकाराः लेखकाः, कवयः रचनाकाराश्च स्व–स्व–कृतीः विचारान् च प्रकाशयन्ति स्म।

संचारमाध्यमानाम् अनेकविधैः आविष्कारैः सार्धमेव, अन्ताराष्ट्रियासु राष्ट्रियासु क्षेत्रीयासु च भाषासु विविधानां वार्तापत्राणां पत्रिकाणां च प्रकाशनमारब्धम्। पूर्वमपि प्रकाशनमिदं संजायते स्म, परं च साम्प्रतमेतत् तीव्रतरं सत् नैकविधं प्रसष्तं विस्तृतं च जातम्।

संस्कृतभाषायाः पत्रकारैः वार्ताहरैः, लेखकैः, विचारकैः कविभिश्चापि स्व–स्व–साधनशक्तिभिः सार्धं महत्तमं कार्यमिदं स्वीकृतम्, प्राणान्तं यावच्च ''अङ्गीकृतं सुकृतिनः परिपालयन्ति'' इत्याभाणकमाधष्य जीवनव्रतमिव पत्रकारिताधर्मोऽङ्गीकृतः।

संस्कृतभाषायाः पत्रकारिताव्रतम् अतितरां दुष्करं वर्तते। अस्य व्रतस्यानुपालने याः नाम समस्याः सम्मुखीक्रियन्ते तासां सर्वविधानां समस्यानां समुल्लेख–पुरस्सरं किं नाम भवेदासां समाधानमिति प्रस्तुतेऽध्याये विशदीकुर्मः।

### संस्कृतस्य पत्रकारिताक्षेत्रे वर्तमानाः समस्याः

अन्यासु भाषासु वार्तापत्राणां विभिन्नानां च पत्रिकाणां प्रकाशनस्य

अनेकविधानि उद्देश्यानि भवन्ति। केचन धनार्जनाय व्यवसायरूपेण हिन्द्याम्, आङ्ग्लभाषायाम् अपरस्यां वा कस्याञ्चित् भाषायां वार्तापत्राणि पत्रिकाश्च प्रकाशयन्ति। केचन तु स्वकीयां प्रसिद्धिं प्रतिष्ठापयितुम्, केचित्तु स्वीयं वैशिष्ट्यं च सामाजिकानां समक्षमुपस्थापयितुं वार्तापत्र–प्रकाशनम् आरभन्ते। अपरे स्वरचनाः प्रकाशयितुं मित्राणां परिचितानां ज्ञातिजनानां च रचनाः लेखान् च प्रकाशयितुं पत्रपत्रिकाणां प्रकाशनाय समुत्सहन्ते। इतरे च जातिविशेषस्य वर्गविशेषस्य वा समुन्नयनाय स्वसंघटनं च द्रढयितुं जातिपत्राणि वर्गविशेषपत्राणि वा प्रकाशयन्ति। केचन तु समाजमुद्वेलयितुं संजायमानघटनाविषये समाजं सूचयितुं स्वाभीष्टसमाजं संरचयितुं च वार्तापत्राणि पत्रिकाश्च प्रकाशयन्ति। केवलं सेवाभावमङ्गीकृत्य पत्रपत्रिकाणां प्रकाशने विरला एव जनाः संलग्नाः समवलोक्यन्ते।

एतत्तु सहजमेव प्रतीयते यत् आसां भाषाणां ज्ञातॄणां व्यवहर्तॄणां च संख्याबलं प्रबलतरं बहुसंख्यात्मकं च वर्तते। लोकतान्त्रिकप्रशासनमपि सूचनानाम् आदानप्रदानार्थं संचारमाध्यमान् विशेषेण च पत्रपत्रिकादीन् शक्तसाधनत्वेन स्वीकरोति, अत एव प्रशासकीयविभागाः मन्त्रालयाश्च तेभ्यः ताभ्यश्च विज्ञापनादिप्रदानेन आर्थिकं साहाय्यं कुर्वन्ति।

केचन जनास्तु बहूनि साप्ताहिकानि वार्तापत्राणि केवलम् आर्थिकं लाभमधिगन्तुं प्रकाशयन्ति। ते किं कुर्वन्ति? सीमितसंख्यायां पत्राणां मुद्रणं विधाय प्रशासनविभागेभ्यः आर्थिकसाहाय्यम् आददते, परन्तु संस्कृतपत्रकारितायाः उद्देश्यानि, अन्यभाषिकपत्राणाम् अपेक्षया भिन्नानि एवावर्तन्त, साम्प्रतं च वर्तन्ते, भविष्यति काले च वर्तितारः। सर्वात्मना सुरभारती–सेवायै, राष्ट्रिय–रिक्थस्य संरक्षणाय, संस्कृति–संस्कृतयोः प्रसाराय समुचितानां प्रवाहिपरम्पराणां च परिपोषणाय संस्कृतभाषिक्यः पत्रपत्रिकाः सततं प्रकाश्यन्ते। एवमपि वक्तुं शक्यते यत् संस्कृतपत्रकारितायाः आविर्भावः एव सेवाभावनया तदानीन्तने काले (स्वातन्त्र्य–संघर्षावसरे) समभूत्। तदा संस्कृतज्ञैः संस्कृताभिमानिभिश्च संस्कृतानुरागिभिः अञ्जसा परिज्ञातं यत् संस्कृतभाषां संरक्षितुम्, सामान्यजनेष्वपि संस्कृतज्ञानं प्रसारयितुम्, संस्कृतस्य अध्येतृसंख्यामभिवर्धयितुं च संस्कृतपत्रपत्रिकाणां प्रकाशनं परमावश्यकमिति।

एतत्सर्वं समीक्ष्य संस्कृतसाहित्यकाराः लेखकाः पत्रकाराश्च स्व–स्व–स्थानेषु संस्कृतपत्रपत्रिकाणां प्रकाशनमारभन्त, परञ्चानेकाभिः समस्याभिः परिवृताः ते निजास्तित्वरक्षणार्थं सततं संघर्षमकुर्वन्। नानाबाधाभिः परिपीडिताः पत्रपत्रिकासम्पादकाः प्रकाशकाश्च मध्ये मध्ये पत्रपत्रिकाणां प्रकाशनमवरोद्धुं विवशीभूताः।

काश्चन पत्रिकाः स्व–जन्मना समकालमेव काल–कवलिताः अभूवन्, काश्चन शैशवे एव अवरुद्ध–गतिकाः जाताः। परं च "विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः, न्याय्यात् पथः प्रविचलन्ति पदं न धीराः" इति महाकवेः भर्तृहरेः उक्तिं चरितार्थयन्तः सुरभारती–सेवकाः न हतोत्साहाः अभूवन्। एतेषां संघर्षोऽयं साम्प्रतमपि प्रवर्तते, लक्ष्यसिद्धिं यावच्च नूनमनारतं प्रवर्तिता।

**विविधाः समस्याः**

संस्कृतपत्रकारिताक्षेत्रे पत्रकारैः सम्पादकैः प्रकाशकैश्च नानाविधाः समस्याः सम्मुखीक्रियन्ते। आसां विषये वयं विस्तरेण विचारयामः।

- प्रशासनात् अपेक्षितं साहाय्यं नोपलभ्यते–

वयं सर्वेऽपि तथ्यमिदं जानीमः यत् राज्याश्रयं प्राप्य काचिदपि भाषा तस्याः भाषायाः वाङ्मयं च सुतरां पल्लविते विकसिते च भवतः। राज्याश्रयेणैव पुरा आङ्ग्लभाषा उर्दूभाषा च प्रावर्धेताम्। ततः परं, स्वातन्त्र्यावाप्तेः अनन्तरं भारतीय–लोकतन्त्र–प्रशासनस्य साहाय्येन हिन्दीभाषा विकसिता जायते। किं संस्कृतस्य कृतेऽपि यथापेक्षितम् अवधानं साहाय्यं च उपलभ्येते? प्रश्नोऽयं सर्वेषामपि संस्कृतपत्रपत्रिकाणां सम्पादकानां प्रकाशकानां च चेतांसि उद्वेलयति।

- संस्कृतस्य संरक्षणभावे धनाढ्यानाम् औदासीन्यम्–

परतन्त्रे भारते धनाढ्याः जनाः संस्कृति–संस्कृतयोः संरक्षणार्थं तत्पराः अभूवन्। विद्वांसोऽपि सर्वमपि स्वकीयं सुखं परित्यज्य शास्त्राणां वैदिक–परम्पराणां च संधारणार्थं समर्पिताः आसन्। कण्ठाग्रीकरणप्रणाल्या ग्रामे ग्रामे नगरे नगरे च पाठशालासु विद्यालयेषु च शास्त्राणां वेदानां च रक्षणं तेऽकार्षुः। परन्तु स्वतन्त्रभारते संस्कृत–पत्रपत्रिकाणां संरक्षणाय न

तादृग्विधाः बहवो जनाः अग्रेसराः अभूवन्। धनाढ्याः अपि जनाः न तावन्तोऽधुना संस्कृत–पत्रकारितायै उत्साहवन्तो दरीदृश्यन्ते– इत्येवं दूयते हृदयम्।

• संस्कृत–लेखकानां बहुशः अभावः–

सम्पादकः प्रकाशको वा यथाकथञ्चित् संस्कृत–पत्र–पत्रिकाप्रकाशनाय बद्धपरिकरो भवति तदासौ लेखकानाम् अभावमपि पौनःपुन्येन सम्मुखीकरोति। पत्रिकायै लेखप्रेषणायासौ पौनःपुनिकं निवेदनं लेखकेभ्यो ज्ञापयति परं च, प्रतिशतं पञ्च दश वा संस्कृतस्य लेखकाः, कवयो विद्वांसः च लेखान् स्वरचनाश्च प्रेषयन्ति। ये च प्रेषयन्ति, तेष्वपि बहुसंख्यकाः अशुद्धं लिखन्ति। केचन तु केवलं नाम–प्रकाशनाय यत् किमपि लिखित्वा प्रेषयन्ति। केचन अनुसन्धातारः शोधग्रन्थादेव कञ्चन अंशविशेषं सम्प्रेष्य पत्रिका–माध्यमेन प्राध्यापकपदचयने लाभमधिगन्तुम् ईहन्ते।

संस्कृतभाषायाः व्याकरणस्य पुष्ट–ज्ञानाभावकारणात् प्रायशः शुद्धरीत्या लेखन–प्रवीणाः जनाः नोपलभ्यन्ते। ये च नवीनाः युवानो वा सन्ति, ते हि उच्चपदमधिगम्यापि संस्कृते लेखितुं प्रायशोऽसमर्थाः एव, अनभ्यासात्।

शुद्धलेखन–सामर्थ्याभावात् नैकशो निवेदनानन्तरम् अपि न ते स्वलेखान् प्रेषयन्ति। व्याकरण–ज्ञानाभावाद् अशुद्धि–संशोधनस्य अभावोऽपि बृहत्समस्यारूपेण संस्कृत–पत्र–पत्रिका–सम्पादकैः सम्मुखीक्रियते। प्रथमं तावत् लेखकाः अशुद्धं लिखन्ति, अपरं च, अशुद्धिसंशोधकाः अपि अशुद्धि–परिमार्जनेऽसमर्थाः भवन्ति। एतत्तु "गण्डस्योपरि स्फोटः" इत्युक्तिं चरितार्थयति।

• संस्कृत–पत्र–पत्रिकाणां पाठकानां ग्राहकाणां वा भूयान् अभावः–

इदं तु स्पष्टतरं तथ्यं यदल्पसंख्यकाः एव जनाः सम्यक्तया संस्कृतमवगच्छन्ति। संस्कृतभाषायाः ज्ञानाभावे संस्कृतपत्रपत्रिकाणां ग्राहकाणामपि अभावः एव बोभवीति। ये च संस्कृतभाषाविदोऽपि सन्ति, न ते पत्रपत्रिकाणां नियतग्राहकाः भवन्ति। प्रायशो जनाः स्वयं संस्कृतपत्रपत्रिकाः नैव क्रीणन्ति। ते प्रायेण स्वमित्रेभ्यः परिचितेभ्यो वा आदायैव पठन्ति। संस्कृतज्ञाः अपि प्रायेण विशेषरूपेण पत्रपत्रिकाः क्रेतुं कृपणाः एव संलक्ष्यन्ते।

छात्राणामपि अभिरुचिः संस्कृतपत्रिकापठने न संलक्ष्यते। इत्थं हि न सामान्याः जनाः, न च विद्वांसो, न च संस्कृतानुरागिणो न वा छात्राः स्वेच्छया ग्राहकाः भवन्ति। कदाचित् कोऽपि कस्यचन प्रभावेण ग्राहकत्वमङ्गीकरोति चेत्तथापि नियतकालाननतरं न पुनः नवीनीकरणाय यतते। प्रशासनमपि संस्कृतं प्रत्युदासीनमेव। विविधपुस्तकालयेषु राजकीयविद्यालयेषु विश्वविद्यालेषु च पत्रिकाः प्रेषयितुं नैकवारं विहितेषु निवेदनेषु सत्सु प्रशासकीयविभागाः नैतदर्थम् आदिशन्ति। संस्कृतसंस्थाः अपि नियतरूपेण ग्राहकत्वं न स्वीकुर्वन्ति। ग्राहकाभावरूपिणी संस्कृतपत्रपत्रिकाणाम् एषा समस्या साम्प्रतमपि न्यूनाधिकत्वेन तथैवास्ति।

- अपेक्षितानि विज्ञापनानि नोपलभ्यन्ते–

कस्यचन वार्तापत्रस्य कस्याश्चन पत्रिकायाः वा कृते अर्थव्यवस्थायाः दृढीकरणार्थं विज्ञापनप्रकाशनमेकं प्रमुखं साधनं वर्तते। उद्योगप्रधानेऽस्मिन् युगे व्यवसायिनः इतरे च जनाः स्व-स्वोत्पादानां वस्तूनां संस्थानां च प्रचारं विज्ञापनमाध्यमेनैव कुर्वन्ति। विज्ञापनदातारः ताभ्यः एव पत्रपत्रिकाभ्यः विज्ञापनानि प्रयच्छन्ति यासां ग्राहकसंख्या अतितरां समुन्नतास्ति। अपि च, नानावर्णेषु स्निग्धपत्रेषु च आकर्षकाणि विज्ञापनानि जनान् आवर्जयन्ति। तच्च कार्यं महार्घतावशात् संस्कृतपत्रकाराः कर्तुं नैव प्रभवन्ति। संस्कृतपत्राणामध्येतारः संस्कृतज्ञाः एव भवन्ति इति कृत्वापि अत्र विज्ञापनाभावः प्रायशः संलक्ष्यते। कृतेऽपि प्रयत्ने विज्ञापनानि सारल्येन नैव समुपलभ्यन्ते। केवलं व्यक्तिशो ये केचन सम्पादकेन प्रबन्धसम्पादकेन वा सम्बद्धाः परिचिताः प्रभाविताश्च व्यापारिणः प्राशासनिकविभागाः वा ते एव तमुपकर्तुं विज्ञापनानि यच्छन्ति।

साम्प्रतं तु विज्ञापनावाप्त्यै राजनीतिकप्रभावोऽपि महत्त्वं भजते। दलविशेषेण सम्बद्धा चेत् पत्रिका तर्हि दलविशेषस्य प्रशासनं तस्यै विज्ञापनानि प्रददाति अन्यथा नैव। महतीयं समस्या संस्कृतपत्रकारैः सम्मुखीक्रियते।

- संस्कृतवार्तापत्रपत्रिकाणां प्रकाशने मुद्रणकर्गदादिसौविध्याभावः–

प्रायेण मुद्रणालयेषु ये कर्मकराः मुद्रणकार्यम्, अक्षरयोजनं वा कुर्वन्ति ते संस्कृतज्ञाः नैव भवन्ति। साम्प्रतं तु अत्याधुनिकप्रविधिना संगणकैः

अक्षराणि समायोज्यन्ते। अत्र ये नाम संगणकचालकाः ते सर्वेऽपि प्रायेण संस्कृतज्ञाः नैव भवन्ति। ये नाम संस्कृतज्ञाः ते प्रायेण संगणकयन्त्राक्षर–संयोजकाः नैव वर्तन्ते। इत्थं महती बाधा शुद्धरीत्या संस्कृतपत्राणां प्रकाशने सम्मुखीक्रियते। येन केनापि प्रकारेण अक्षरसंयोजने जाते सति आधुनिकप्रविधिना यत्र पत्रिकाः मुद्र्यन्ते, तत्रापि प्रायशो न कश्चन संस्कृतज्ञो भवति, परिणामत्वेन कदाचित् अशुद्धिबहुलं कदाचिच्च वर्णव्यत्ययबहुलं प्रकाशनं मुद्रणं वा भवति। इयमस्ति व्यावहारिकी बाधा संस्कृतपत्रकारिताक्षेत्रे।

एवं हि, पत्रपत्रिकाणां प्रकाशनार्थं कर्गदं नाम प्रथमं साधनम्। कर्गदमूल्यानि अनुदिनम् एधन्ते। यादृशस्य कर्गदजातस्यावश्यकता विद्यते। तादृशमनुकूलं श्रेष्ठं पत्रं तु प्रायशः संस्कृत–पत्र–पत्रिकाः नैव लभन्ते। अत एव संस्कृतवार्तापत्राणां पत्रिकाणां च मुखपत्राणि प्रायेण आकर्षणशून्यानि भवन्ति। यदि सुस्निग्धान्याकर्षकाणि पत्राणि संस्कृत–पत्र–पत्रिकासु उपयुज्यन्ते चेत् तासां पत्रिकाणां मूल्यमपि एधिता। ततः परम्, क्रेतारो नैव लप्स्यन्ते। प्रशासनमपि दिनवार्तापत्रेभ्यः साप्ताहिकपत्रिकाभ्यश्च न्यूनमूल्येन कर्गदोपलब्धिं व्यवस्थापयति, परं च संस्कृत–पत्र–पत्रिकाभ्यः नैतत् साहाय्यमुपायनीकरोति। अतो वक्तुं शक्यते यत् कर्गदाभावोऽपि संस्कृत–पत्र–पत्रिकाणां प्रकाशने एका बाधा वर्तते।

- संस्कृत–पत्रकारितायाः तीव्रा समस्यास्ति– धनाभावः

एतत्तु सुप्रसिद्धमेव यत् 'सर्वे गुणाः काञ्चनमाश्रयन्ति।' सर्वमपि कार्यं वित्तादिना सिद्ध्यति। अनुभूततथ्यमिदं यत् अत्यन्तमुत्साहिनः संस्कृतानुरागिणः संस्कृतस्य श्रेष्ठाः विद्वांसः च संस्कृत–सेवाभाव–सम्प्रेरिताः सन्तः दैनिकं साप्ताहिकं पाक्षिकं वार्तापत्रं मासिकीं वा संस्कृतपत्रिकां प्रकाशयितुम् आरभन्ते, परन्तु किञ्चित्कालानन्तरम् एतादृशमार्थिक–सङ्कटं समुपतिष्ठते, यस्य सम्मुखीकरणं सुतरां दुष्करं प्रतीयते।

धनाभाव–कारणात् पत्र–पत्रिकायाः सम्पादनं प्रकाशनं चातितरां कठिनं भवति। ये नाम उद्योगपतयः, ते तु स्वीय–विभिन्नोद्योगेषु विनिवेशित–पुञ्जी–कारणात् बृहदाकारयुतानां दैनिकवार्तापत्राणां प्रकाशनेषु क्षमाः, परन्तु ये नाम सरस्वतीसमुपासकाः सारस्वत–साधना–निरताः च ते कुतः धनमादातुं

शक्नुयुः। आर्थिकसहयोगदातारोऽपि तस्मै एव आर्थिकं साहाय्यं प्रयच्छन्ति येन तेषां स्वार्थसिद्धिः संभवेत्। इत्थं धनाभाव एव संस्कृत–पत्र– पत्रिकाणां प्रकाशने प्रमुखा बाधा इति सुस्पष्टं वक्तुं शक्यते।

## विविधसमस्यानां समाधानानि

याः नाम समस्याः वा बाधाः वा सन्ति तासां निराकरणं भवेत् चेत् समस्याः नूनं व्यपगताः भवितारः।

- प्रशासनं समधिकं साहाय्यं प्रदद्यात्–

प्रशासनं स्वाधीनसंस्थासु स्वाधीनविभागेषु च नियतरूपेण संस्कृत–पत्र–पत्रिकाः क्रीणीयात् चेत् तदा राज्याश्रयमवाप्य संस्कृत–पत्र–पत्रिकाः नियतरूपेण प्रकाशिताः भवितुमर्हन्ति।

केन्द्रप्रशासनस्य मानवसंसाधनविकासमन्त्रालयः तदन्तर्गतं राष्ट्रियसंस्कृतसंस्थानं यद्यपि सम्प्रति नानाविधाभ्यः पत्रपत्रिकाभ्यः आर्थिकमनुदानं यच्छतः, परं च महार्घतातुलनायां तदस्ति नैव पर्याप्तम्। अत एव केन्द्रीयप्रशासनात्, राज्यप्रशासनेभ्यः च संस्कृत–पत्र–पत्रिकाभ्यः समधिकं साहाय्यं नूनं पदेयम्।

- धनाढ्याः समुदाराः भवेयुः–

धनविषये सुभाषितकारेण प्रोक्तम्–

दानं भोगो नाशस्तिस्रो भवन्ति गतयो वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति।।

परं यदा धनाढ्याः जनाः संस्कृति–संस्कृताभ्यां विमुखीभूय अनौदार्यं प्रदर्शयन्ति तदा दूयते हृदयम्। साम्प्रतं ये नाम विभिन्नानां सम्प्रदायानाम् आचार्याः मठाधीशाः मण्डलेश्वराः समृद्धाः उद्योगपतयश्च संस्कृत–पत्र–पत्रिकाणां कृते स्थायिधन–निक्षेपं (Fixed Deposit) स्थापयन्ति व्यवस्थापयन्ति च चेत्तदा पत्रपत्रिकादीनां संरक्षणं नूनं संभविता। महतीयं समस्या समृद्धानां धनाढ्यानां च औदार्येण महदंशेन समाधातुं शक्यते।

- संस्कृत–लेखकाः प्रमादं विहाय सक्रियाः भवेयुः–

पत्र–पत्रिकादिषु ये नियतं लिखन्ति, ते तु श्लाघ्याः, वन्दनीयाः अभिनन्दनीयाश्च, परं च नवप्रतिभाः अपि रचनाधर्ममङ्गीकुर्युरिति कृत्वा लेखकेभ्यः पारिश्रमिकं नूनं प्रदेयम्। श्रेष्ठाः लेखकाः पुरस्क्रियन्ते चेत्तेऽपि प्रोत्साहिताः भवन्ति। सरलया भाषया लिखिताः लेखाः प्रकाशिताः स्युः, परं च व्याकरणदृश्ट्या, भाषा शुद्धा स्याद् इति संस्कृतलेखकैः नूनमवधेयम्।

- सरल–संस्कृत–प्रयोगेण पाठकाः आकर्षिताः भवेयुः–

संस्कृतपत्रपत्रिकाणां कृते पाठकानाम् अभावः एका महती समस्या वर्तते। यदि संस्कृत–पत्रपत्रिकादिषु आकर्षणयुता रुचिकरी च सामग्री प्रकाश्यते चेत्तदा पाठकानां संख्या नूनमेधिता।

एतदतिरिच्य, विभिन्नानि संघटनानि, सम्मेलनानि, संस्थाः, संस्कृतानुरागिणो जनाः पाठकान् प्रेरयेयुः। प्रशासनमपि विभिन्नानां विश्वविद्यालयानां महाविद्यालयानां च छात्रेभ्यः पुस्तकालयेभ्यः एतादृशीः संस्कृत–पत्र–पत्रिकाः क्रेतुम् आदिशेत् तदा नूनं शनैः शनैः संस्कृतपाठकानां संख्या एधिता।

- विज्ञापनार्थं शासनिकनीतौ परिवर्तनं स्यात्–

किमपि वार्तापत्रं काचन पत्रिका वा विज्ञापनबलेन एव सततं प्रकाशिते भवतः। अतः अधिकाधिकानि विज्ञापनानि कया रीत्या अधिगतानि स्युरित्येतदर्थं प्रकाशकैः सम्पादकैश्च सततं प्रयतनीयम्। प्रशासनमपि स्वपक्षतः संस्कृतभाषायाः पत्र–पत्रिकाभ्यः शासनिक–नीति–विषयकाणि विज्ञापनानि प्रयच्छेत्, एतदर्थं च आवश्यकतायां सत्यां शासनिकनीतौ परिवर्तनमपि स्यात्। एवं हि, विभिन्नाः केन्द्रीयाः राज्यप्रशासनानां च मन्त्रालयाः अपि सुबहु कर्तुं पारयन्ति। एतैः समुपायैः नूनं संस्कृत–पत्र–पत्रिकाणां प्रकाशनं सुकरं भविता।

- मुद्रण–कर्गद–सौविध्यानि प्रापितानि स्युः–

सामान्यतया साम्प्रतं सर्वविधस्य मुद्रणस्य कृते कम्प्यूटरीकृता प्रणाली एव प्रवर्तते, अतः देवनागर्याः लिपेः अक्षरयोजकाः संस्कृतभाषिकीणां पत्र–पत्रिकादीनामपि मुद्रणं सारल्येन कर्तुं पारयन्ति, परञ्चैतदर्थं ते किञ्चित् विशिष्टं प्रशिक्षणं नूनम् आददीरन्। अद्यत्वे तु संस्कृतज्ञाः अपि

संगणकमाध्यमेन अक्षरसंयोजने रुचिमन्तो वर्तन्ते इति कृत्वा संस्कृत–पत्र–पत्रिकाणां मुद्रणं तावत् नैवास्ति दुष्करम्।

तथापि उभय–पक्षयोः कृते अस्य अभ्यासः नूनमावश्यकः। अपरेषु समुपायेषु संस्कृत–मुद्रणालयानां संस्थापनमपि अन्यतमं वर्तते।

कर्गदादि–सौविध्यानां कृते प्रशासनं न्यूनीकृत–मूल्यैः कर्गद–सौविध्यानि प्रापयेत्। तदैव समस्यैषा अपाकृता भविता। इतः परमपि यदि संस्कृत–पत्र–पत्रिकाणां कृते 'कोटा' इति विशिष्टं कर्गद–भारनिर्धारणं स्यात् चेत्तदस्ति वरम्। एतैः समुपायैः नूनं मुद्रण–कर्गद–विषयिणी समस्यैषा दूरीभविता।

- धनाभावं दूरीकर्तुं व्यावहारिकोपायाः विधेयाः–

अञ्जसा एवं प्रतीयते यत् प्रशासनम्, सामाजिकाः, श्रेष्ठिनः, उद्योगपतयः, विज्ञापनदातारः, ग्राहकाः, संस्कृतपण्डिताः, संस्कृतच्छात्राः च सहयोगं कुर्वन्ति चेत्तदा संस्कृत–पत्र–पत्रिकादीनां प्रकाशनं सुकरं सेत्स्यति। ये च संस्कृतज्ञाः तैः सार्धं व्यक्तिशः सम्पर्कं विधाय, सर्वेऽपि संस्कृतज्ञाः पत्रिकाणां संस्कृत–वार्तापत्राणां वा ग्राहकाः भवेयुरिति यत्नोऽपि करणीयः। ये च विद्वांसो ज्योतिर्विदः, आयुर्विज्ञानवेत्तारः, वास्तुविदो योगविज्ञानविदश्च सन्ति ते निज–सम्पर्केण प्रभावितान् समृद्धान् धनाढ्यान् च संस्कृतपत्रकारितायै आर्थिकसाहाय्यप्रदानार्थं सम्प्रेरयेयुः। संस्कृतसम्पादकाः विविधविज्ञानविद्भिः विद्वद्भिः सार्धं सम्पर्कं विधाय तेषां प्रभावेण आर्थिकं सहयोगं प्राप्नुयुः। एता शी काचिदपि समस्या नास्ति यस्याः समाधानं भवितुं न शक्यते।

---

# सन्दर्भग्रन्थसूची

1. समाचारपत्र–कला –पं.अम्बिकाप्रसादवाजपेयी

2. संस्कृतसाहित्य–बीसवीं शताब्दी– डॉ.राधावल्लभत्रिपाठी

3. देववाणी–सुवासः (द्वितीयखण्डः)– सम्पादक– डॉ. राजेन्द्रमिश्रः'अभिराजः'

4. India What Can It Teach Us- Maxmullar

5. History of Indian Literature- M.Winternitz

6. संस्कृत–पत्रकारिता का इतिहास– डॉ.रामगोपालमिश्रः

7. हिन्दी पत्रकारिता के विविध–आयाम –सम्पादक–डॉ.वेदप्रतापवैदिक

8. हिन्दी पत्रकारिता– कृष्णबिहारी मिश्र

9. Post Independence Sanskrit Literarure – A Critical Survey [Prof.Dr.A.M.Prajapati Felicitation Volume]

Edi: ManiBhai K.Prajapati, Patan, Gujatat, 2005.

10. स्वातन्त्र्योत्तर–संस्कृत–कथासाहित्यम्

निबन्धकारः– देवर्षि कलानाथशास्त्री

11. स्वातन्त्र्योत्तर–संस्कृत–पत्रकारिता

निबन्धकारः– डॉ.लालाशंकरगयावालः

12. स्वतन्त्रता–संग्राम का समाजशास्त्र– डॉ.अजयकुमारमिश्र

13. राजस्थाने संस्कृतपत्रकारता –डॉ.चेतना

14. विभिन्नानां कम्प्यूटर–अन्तर्जाल–सञ्चिकानां सन्दर्भः

15. संस्कृत–पत्र–पत्रिकाएँ

निबन्धकार– आचार्यमहेशचन्द्रशर्मा

---

पत्रकारिताक्षेत्रे विशेषेण चाकाशवाणी–दूरदर्शनयोः संस्कृतवार्ताप्रसारणेषु प्रयुज्यमानानां केषाञ्चन शब्दानां निदर्शनम्–

E-mail- विद्युत्पत्रम्, वि–पत्रम्

Close circuit Television [CCTV]- निगूढ–परिदर्शियन्त्रम्

Rubber- धृषिः

Forensic Test- अपराधाभिज्ञान–परीक्षणम्

Bail- प्रतिभूतिः, प्रत्याभूत्याधृता मुक्तिः

To share- साधारणीकर्तुम्

Motivated- अभिप्रेरितः

Software- प्रयोगसामग्री

Hardware- यन्त्रसामग्री

Count down- प्रतीपगणनम्

Cyber act- वैद्युदाणविक–संचाराधिनियमः

Double Decker-Rail- द्वितलीयं रेलयानम्

Constable- दण्डधरो रक्षिकर्मी

Radio-bridge- श्रव्य–संचारसेतुः

Digitization- अङ्कीय–संरक्षणम्

Close circuit cameras- सूक्ष्मतर–परिधि–छायाङ्ककाः

Time bomb device- कालचाक्रिक–विस्फोटनम्

Viscera sample- अन्त्र–प्रतिरूपम्

Temper-proof-I-Card- अक्षोभ्याभिज्ञान–पत्रम्

Fusion energy- विलयीकृतोर्जा

Recovery- प्रतिपूर्तिः

Carbon- प्राङ्गारः

Battery- संचेत्री, संचेत्रः, संचेत्रम् (ऊर्जासंचेत्री वा)

Pre-paid mobile- प्राक्–शुल्कीयो जङ्गमदूरभाषः, प्राक्–प्रदत्तभाटकः जङ्गमदूरभाषः

Animation films- वार्णिकरेखाचित्राणि

Memorandum of understanding- अवबोधपत्रम्

Bakery- आपूपिकापणम्

Packet- पोटलिका

Ration-card- समांश–वितरण–पत्रम्

Fax- प्रैष–छायापत्रम्

Stapled visa- ग्रथित–प्रवेशानुज्ञापत्रम्

Passport- पारगमनानुमति–पत्रम्

Green house gas emission- विषाक्त–वात्युत्सर्जनम्

Postmortem- शव–व्यवच्छेदः

Broad-band connectivity- बृहद्बन्ध–सम्पृक्तिः

Stock exchange- प्रतिभूति–विनिमय–केन्द्रम्

Flag-march- ध्वजप्रदर्शि–प्रबोधनम्

Sim-card- चलदूरभाषीय–स्मृतिपुटकम्

Baton- ध्वजशिखा, क्रीडाज्योतिः

Tomb- वर्तुलशिखरम्

Exit-poll- प्राक्परिणाम–विश्लेषणम्

..........................



डा. बलदेवानन्दसागरः आकाशवाण्यां संस्कृतवार्ताप्रवाचकरूपेण निखिलेऽपि देशे अतिविश्रुतः। गुजराते भावनगरे प्राप्तजन्मा सः लालबहादुरशास्त्रिसंस्कृतविद्यापीठतः पि.एच.डी.पदवीं प्राप्तवान् अस्ति। आकाशवाण्यां दूरदर्शने च सेवां कुर्वतः तस्य अभिनयादिषु अनेकासु कलासु कुशलता अस्ति। आकाशवाण्यां दूरदर्शने च बहुषु नाटकेषु तेन अभिनयः कृतः अस्ति। देशे विदेशेषु च अनेकेषु सम्मेलनेषु भागं गृहीतवता तेन अनेकानि पुस्तकानि रचितानि सन्ति।



मूल्यम् - रू. ३०/-

ISBN - 978-93-81160-19-0